भवतु वेदविदां परिवर्द्धनम्, ... मूढधियां परिनर्द्धनम् ।

ओ३म्

श्री० भारवि विरचितम्.

# किरातार्जुनीयम् ।

(सर्गत्रयात्मकम्)



मुरादाबाद नगरस्थ वलदेवार्य्य संस्कृ-
तपाठशालायाः प्रथमाऽध्यापकेन

## जीवारामेण शर्मणा

विरचितया

व्याख्यया समलंकृतम्

मुरादाबादनगरे

"लक्ष्मीनारायण" मुद्रणयन्त्रे

मुद्रापयित्वा प्रकाशितम्

प्रथमावृत्तौ ५०० } सन् १९०७ { मूल्य

जयतु वेदमतो भुविभास्करः, ... कलहम्परमेश्वर ! ॥

॥ ओ३म् ॥

# किरातार्जुनीयम्

## सटीकम् ।

श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् । स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥

कुरूणाम् = कुरुजनपदानाम् । अधिपस्य = दुर्योधनस्य नृपतेः । श्रियः = राजलक्ष्म्याः । पालनीम् = प्रतिष्ठापिकाम् । प्रजासु = जनेषु विषये । वृत्तिम् = व्यवहारम् । वेदितुम् = विज्ञातुम् । यम् = वनेचरम् । अयुङ्क्त = नियुक्तवान् । वर्णिलिङ्गी = ब्रह्मचारिवेषधारीत्यर्थः । सः = असौ नियुक्तः वनेचरः = किरातः । विदितः = परवृत्तान्तज्ञानवानित्यर्थः । युधिष्ठिरम् = धर्मराजम् । द्वैतवने = द्वैताख्यतपोवने । समाययौ = सम्प्राप्तः ॥ १ ॥

---

१–तस्यनिवासइत्यण्प्रत्ययः । जनपदेलुबित्यणोलुप् २–अधिपातिरक्षति. अधि×पा×कः, आतश्चोपसर्गे इति कः । आतोऽलोपइटिचेत्याकारस्यलोपः । ३ क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वांदीर्घोऽसम्प्रसारणं चेत्युणादिसूत्रेण क्विप् । ४–पाल्यतेऽनयेति, पालनी×करणाधिकरणयोश्चेतिल्युट् । टिड्ढाणञितिङीप्‌ताम । ५–प्रजायते इति । प्र×जन×उपसर्गेच संज्ञायामितिडः । ६ वृत×स्त्रियांक्तिन ७ विद् तुमुन्ण्वुलौ क्रियायां क्रियार्थायामितितुमुन् । ८–यत×अम् । 'त्यदादीनामः' अतोगुणे अमिपूर्वः । ९–वर्णाद्ब्रह्मचारिणीतीनिप्रत्ययः । १०-त्यदादीनामः अतोगुणे, तदोः सः सावनन्त्ययोरित्यनेनतकारस्यसकारः । ११–वनेचरतीति । चरेष्टः, इतिटप्रत्ययः । तत्पुरुषेकृतिबहुलमित्यलुक् । १२ 'अर्शआदिभ्योऽच्' इत्यच् प्रत्ययः । १३-युधिरणे स्थिरम् = युधिष्ठिरम् । हलदन्तात् सप्तम्याः संज्ञायामित्यलुक्, गवियुधिभ्यां स्थिरः, इतिषत्वम् ॥ अस्मिन्सर्गे वंशस्थवृत्तम् ॥

कृतप्रणामस्य[1] महीं[3] महीभुजे[4] जितां सपत्नेन[2] निवेदयिष्यतः । नविव्यथे[6] तस्य मनो नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः[5] ॥ २ ॥

कृतप्रणामस्य = कृतनमस्कारस्य । सपत्नेन = रिपुणा-दुर्योधनेन । जिताम् = स्वायत्तीकृताम् । महीम् = वसुमताम् । महीभुजे = युधिष्ठिराय । निवेदयिष्यतः = ज्ञापयिष्यतः । तस्य = वनेचरस्य । मनः = स्वान्तम् । न = नो । विव्यथे = व्यथामगात् । हि = यस्मात् । हितैषिणः = स्वामिहितार्थिनोनराः । मृषा = अलीकम् । प्रियम् = मनोहरम् । प्रवक्तुम् = प्रगादितुम् । नेच्छन्ति = नोवाञ्छन्तीत्यर्थः ॥

द्विषांविघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्यभूभृतः । ससौष्ठवौदार्य्यविशेषशालिनीं विनिश्चितार्थामितिवाचमाददे[7] ॥ ३ ॥

रहसि = एकान्ते । असः = असौवनेचरः । द्विषाम् = वैरिणाम् । विघाताय = द्विषांविहन्तुमित्यर्थः । विधातुम् = निहन्तुम् व्यापारं कर्तुम् । इच्छतः = प्रयत्नंकुर्वतः । भूभृतः = युधिष्ठिरस्य । अनुज्ञाम् = आज्ञाम् । अधिगम्य = प्राप्य । सौष्ठवौदार्य्यविशेषशालिनीम् = सुष्ठुभावः सौष्ठवम्. शब्दसामर्थ्यम् । उदारस्यभावः औदार्य्यम् अर्थसम्पत्तिः तयोर्वि-

---

१—कृतः प्रणामः प्रणतिः येन असौकृतप्रणामः तस्य । प्र+णम+हलश्चेतिभावेघञ् । २-सहपतति एकार्थे -इति । पत+नः । सहस्यसः । ३-मह्यते इति मह्+अच्+मह+गौरादिभ्यश्चेतिङीष् । ४—महींभुनक्तीति महीभुक् तस्मैमहीभुजे । ५-हितमिच्छतीतिहितैषिणः हित+इष+णिनिः । ६-लटः सद्वा, इति शतृप्रत्ययः । -व्यथभयचलनयोरितिधातोर्लिट् ।

७ विनिश्चितः,निश्चयीकृतः—अर्थः तात्पर्य्यं यया ताम् ।

शेषः तेन शालते शोभते इति सौष्ठवौदार्य्यविशेषशालिनी ताम् । विनिश्चितार्थाम् = विशेषतः प्रमाणतो निर्णीतार्थाम् । इ॒ = वक्ष्यमाणरूपाम् । वाचम् = वचनम् । आददे = स्वीकृतवान् ॥ ३ ॥

## वनेचरोऽवोचत् ।

क्रियासु[1] युक्तैर्नृपचारचक्षुषो[2] नवञ्चनीयाः प्रभवोऽनुजीविभिः । अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥

हे नृप ! हे राजन् ! क्रियासु = कृत्यवस्तुषु । युक्तैः = संलग्नैः । अनुजीविभिः = भृत्यैः। चारचक्षुषः = गुप्तदूतलोचना इत्यर्थः। प्रभवः = स्वामिनः। नवञ्चनीयाः = नोपतारणीयाः । अतः = एतदर्थम् । असाधु = अप्रियम् । साधु = प्रियम्। वा = अथवा। क्षन्तुम् = सोढुम्। अर्हसि = योग्योऽसि । कुतः । हितम् = पथ्यम् । मनोहारि = मनोरुचिरम् । वचः = वचनम् । दुर्लभम् = दुष्प्राप्यम् ॥४ ॥

स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किं प्रभुः । सदानुकूलेषु[3] हि कुर्वते रतिं[4] नृपेष्वमात्येषु च सर्वसम्पदः ॥ ५ ॥

यः = सखामात्यादिः। अधिपम् = स्वामिनम् । साधु =

---

१ क्रियते यया असौ अस्मिन् इतिवा ( डुकृञ् करणेकरणकर्माधि करणादौ च यथा यथं शप्रत्ययः ) रिङ् शयग्लिङ्क्षु, इतिरिङादेशः । अचिश्नुधातुभ्रुवां य्वोरियङुवङौवितीयङ् ।

२ चारादूता एव चक्षूंषि लोचनानि येषां ते चारचक्षुषः ।

३ अनुकूलं करोति ( अनुकूल + करोत्यर्थेणिच् पचाद्यच् )

४ रमणं रतिः ( रम्+स्त्रियांक्तिन् अनुदात्तोपदेशेति अनुनासिकलोपः )

हितम् । नशास्ति = नोपदिशति । सः = असौ । किंसखा । कुत्सितं मित्रम् । (दुर्मन्त्रीत्यर्थः) तथा यः प्रभुः = यः स्वामी हितात् = आप्तजनाद्धितोपदेष्टुः सकाशात् । नसंशृणुते = नशृणोति ( हितमितिशेषः ) सकिंप्रभुः = असौकुत्सितस्वामी । हि = यतः । नृपेषु = स्वामिषु । अनुकूलेषु = परस्यानुरक्तेषुसत्सु । अमात्येषु = सचिवेषुच । सदा = सर्वदा । सर्वसम्पदः = विश्वविभवाः । रतिम् = अनुरागम् । कुर्वते = कुर्वन्ति ॥ ५ ॥

निसर्गदुर्बोधमबोधविक्लवाः क्वभूपतीनां चरितंक्वजन्तवः । तवानुभावोयमवेदियन्मया निगूढतत्त्वं नयवर्त्मविद्विषाम् ॥ ६ ॥

निसर्गदुर्बोधम् = स्वभावदुर्ग्रहम् । भूपतीनाम् = राज्ञाम् । चरितम् = चरित्रम् क्व = कुत्र । अबोधविक्लवाः = अज्ञानोपहताः । जन्तवः = मादृशाः पामरजना इत्यर्थः क्वापिकुत्रापि नोभयं संघटतइत्यर्थः । तथापि = तदपि । निगूढतत्त्वम् = संवृतयाथार्थ्यम् । विद्विषाम् = अरीणाम् । नयवर्त्म = षाड्गुण्यप्रयोगः । यन्मयावेदि = ज्ञातमिति यावत् । अयम् = इदंवेदनमित्यर्थः । तव = भवतः । अनुभावः = सामर्थ्यम् ॥ ६ ॥

विशङ्कमानोभवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः । दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

---

१ निगुह्यते संक्रियते इति ( नि + गुह + क्त । यस्यविभाषेतिनेट् ) ।

२–पराभूयते इतिपराभवनमित्यर्थः परा+भू+भावेअप् । ३दुष्टमासमन्ता दुदरयस्य । पृषोदरादित्वात्साधुः । ४गच्छति कार्य्यत्वाननष्टा भवतीति । गम्× वर्तमानेपृषद्बृहन् । महज्जगच्छतृवच्चेत्युणादिस्थाऽतिप्रत्ययेन निपातनात् साधुः ततः शतृतुल्यत्वात् उगितश्चेतिङीप् ।

सुयोधनः = ( सुखेन युध्यतेस सुयोधनः ) दुर्योधनः । नृपासनस्थः = सिंहासनस्थोपि । वनाधिवासिनः = वनमधिवसतीति वनाधिवासीतस्मात् वनस्थात् । राज्यभ्रष्टादपीत्यर्थः । भवतः = त्वत्तः । पराभवम् = पराजयम् । विशङ्कमानः = उत्प्रेक्षमाणः सन् । दुरोदरः = द्यूतकारे पणे द्यूते दुरोदरमित्यमरः । तस्यछद्मना = मिषेण । जिताम् = लब्धाम् । जगतीम् = महीम् । नयेन = नीत्या । जेतुम् = वशीकर्तुम् । समीहते = व्यापियते ॥ ७ ॥

तथापि जिह्मः सभवाज्जिगीषया[1] तनोति शुभ्रं गुणसम्पदा यशः । समुन्नयन्भूतिमनार्य्यसं[2]गमाद्वरं विरोधोऽपि समं महात्मभिः[3] ॥ ८ ॥

तथापि = साशङ्कोपि । जिह्मः = वक्रः । वञ्चकइति यावत् । सः = असौदुर्योधनः । भवज्जिगीषया = गुणैर्भवन्तमाक्रमितु मिच्छयेत्यर्थः । गुणसम्पदा = दानदाक्षिण्यादि गुणगरि म्णाकरणेन । शुभ्रम् = विशदम् । यशः = कीर्तिम् । तनोति = विस्तारयति । तथाहि भूतिम् = ऐश्वर्य्यम् । समुन्नयन् = उत्कर्ष मापादयन् । महात्मभिः समम् = सज्जनैः सहेत्यर्थः।साकं सत्रासमं सह इत्यमरः । अनार्य्यसंगमात् = दुर्जनसंसर्गात् । विरोधोऽपि = विद्वेषोऽपि । वरम् = मनाक्प्रियः ॥ ८

कृतारिषड्वर्गजयेन मानवीमगम्यरूपां प[4]द-

---

१—जेतुमिच्छा जिगीषा तयाजिगीषया ॥ २ ॥ नआर्य्याः अनार्य्याः अनार्य्याणां संगमः, अनार्य्यसंगमः तस्मादनार्यसंगमात् । ३ महानात्मास्वभावो येषांतेमहात्मानः तैर्महात्मभिः ।

४ पद्यते गम्यते यया असौताम् । पद्लतौ×पद्यरिभ्यामविः, इत्यविः प्रत्ययः, तत. पदाविरितिरूपम् । कृदिकारान्तादक्तिनः। इतिपक्षेङीष् तदापदवीतिसिद्धम् ।

वीं प्रपित्सुना । विभज्यनक्तं दिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥ ६ ॥

( षण्णांवर्गः षड्वर्गः ) अरीणाम् = अन्तःशत्रूणाम् । षड्वर्गः = कामक्रोधादिः, तस्यजयः कृतोयेन तेन तथोक्तेन विनीतेनेत्यर्थः । अगम्यरूपाम् = पुरुषमात्रदुष्प्राप्याम् मानवीम् = ( मनोरिमां मानवीम् ) मनूपादिष्टसदाचार क्षुण्णामित्यर्थः । पदवीम् = प्रजापालनपद्धतिम् । प्रपित्सुना= प्रतिपत्तुमिच्छुना । अस्ततन्द्रिणा = ( अस्तातन्द्रिरालस्यं यस्यतेनास्ततन्द्रिणा) अनलसेनेत्यर्थः । तेन = दुर्योधनेन । पौरुषम् = पुरुषकारः । ( पुरुषस्यकर्म पौरुषं पुरुषकारः उद्योग इतियावत ) नक्तंदिवम् = नक्तंचदिवाचनक्तं दिवम्, अहोरात्रयोरित्यर्थः । विभज्य = विभागंविधाय । नयेन = नीत्या । वितन्यते = विस्तार्यते ॥ ९ ॥

सखी नित्र प्रीतियुजोऽनुजीविनः समा नमा-
नान्सुहृदश्च बन्धुभिः । ससंततं दर्शयते गतस्मयः
कृताधि पत्यामिव साधु बन्धुताम् ॥ १० ॥

गतस्मयः = निरहङ्कारः । सः = असौदुर्योधनः । संततम् = अनारतम् । साधु = सम्यक् । अनुजीविनः = भृत्यान् । प्रीतियुजः = स्निग्धान् । सखीनिव = मित्राणीव-दर्शयते । लोकस्यति शेषः । ( शोभनं हृदयंयेषां तान्सुहृदः ) मित्राणिच । बन्धुभिः = भ्रात्रादिभिः । समानमानान् = तुल्यसत्कारान् । दर्शयते । बन्धुताम् = ( बन्धूनां समूहो बन्धुनातांबन्धुताम् ) कृताधिपत्यामिव = कृतं आधिपत्यं

१—प्रीतियुञ्जन्तितेप्रीतियुजः, तान प्रीतियुजः.

स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते बन्धूनार्थप-
तीानिवदर्शयते इत्यर्थः ॥ १० ॥

**असक्तमाराधयतो यथायथं विभज्य भक्त्या[1] समपक्षपातया। गुणानुरागादिव सख्यमीयिवान्नबाधतेऽस्य त्रिगणः परस्परम् ॥ ११ ॥**

यथायथम् = यथास्वम् । विभज्य = विभागं विधाय । असंकीर्णरूपंविविच्येत्यर्थः । पक्षपातः = ( पक्षेपातः पक्षपातः) आसक्तिविशेषः समस्तुल्यो यस्यां सा तथा तया समपक्षपातया । भक्त्या = अनुरागविशेषेण । असक्तम् = अनासक्तम् । आराधयतः = सेव्यमानस्य । अस्य = दुर्योधनस्य । त्रिगणः = ( त्रयाणां धर्मार्थकामानां गणास्त्रिगणास्त्रिवर्गः ) गुणानुरागात् = तदीयगुणेष्वनुरागात् । सख्यम् = मैत्रीम् । ईयिवानिव = उपगतवानिव । परस्परम् = मिथः । न बाधते = नोविघ्नंयाति ॥ ११ ॥

**निरत्ययं साम न दानवर्जितं न भूरिदानं विरहय्य सत्क्रियाम् । प्रवर्त्तते तस्य विशेषशालिनी गुणानुरोधेन[2] विनानसत्क्रिया ॥ १२ ॥**

तस्य = दुर्योधनस्य । निरत्ययम् = निर्बाधम् । अमायिकमित्यर्थः । साम = सान्त्वम् । दानवर्जितम् = दानरहितम् । नप्रवर्तते = नवर्त्ति । भूरि = प्रभूतम् । दानम् = धनत्यागः । सत्क्रियाम् = सत्कृत्यम् । विरहय्य = विहाय नप्रवर्त्तते । विशेषशालिनी = अतिशययोगिनी । सत्क्रिया =

---

१ भज्यत इति भक्तिः ( स्त्रियांक्तिन् ) तया भक्त्या ।

२ गुणानामनुरोधःगुणानुरोधः तेनगुणानुरोधेन। अनु×रुध×घञ्प्रत्ययेकृतेऽनुरोधस्य सिद्धिः॥

आदरक्रिया । गुणानुरोधेन = गुणानुरागेण । विना = अन्तरेण । नप्रवर्तते = नवर्त्तते ॥ १२ ॥

वसूनिवाञ्छन्न वशी न मन्युनास्वधर्म इत्येव निवृत्त[1]कारणः । गुरूपदिष्टेन रिपौ सुतेऽपिवा निहन्ति दण्डेन स धर्मविप्लवम्[2] ॥ १३ ॥

वशी = (वशमस्यास्तीति वशी) दुर्योधनः । वसूनि = धनानि । वाञ्छन् = लोभादित्यर्थः । निहन्तीतिशेषः । तथा मन्युना = कोपेनच । निवृत्तकारणः = निवृत्तलोभादिनिमित्तः । स्वस्य = राज्ञः । धर्म्मः = कर्तव्य इत्येव । गुरूपदिष्टेन = प्राड्विवाकोपदिष्टेन । दण्डेन = दमेन । शिक्षयेत्यर्थः । रिपौ = शत्रौ । सुतेऽपिवा = पुत्रेऽपिवा । स्थितमितिशेषः । धर्मविप्लवम् = धर्म्मव्यातिक्रमम् । अधर्ममिति यावत् । निहन्ति = निवारयति ॥ १३ ॥

विधायरक्षान्परितः परेतरा[3]नशङ्किताकार मुपैतिशङ्कितः । क्रियापवर्गे[4]ष्वनुजीविसात्कृताः कृतज्ञ[5]तामस्य वदन्ति संपदः । १४ ।

शङ्कितः = (शङ्काजातास्य शङ्कितः) अविश्वस्तःसन् । परितः = सर्वत्रस्वपरमण्डले । परेतरान् = आत्मीयान् । अशङ्कानिति यावत् । रक्षान् = रक्षकान् । विधाय = कृत्वा नियुज्येत्यर्थः ॥ अशङ्किताकारमुपैति = स्वयमविश्वस्तोऽपि

---

१ निवृत्तं कारणंयस्याऽसौ निवृत्त कारणः । २—धर्मस्यविप्लवः, उपद्रवः, धर्मविप्लवः, तंधर्म्मविप्लवम् । (वि×प्लु×अप्प्रत्यये कृते सति विप्लवस्यसिद्धिः) ३ परेषु शत्रुषु इतरे अन्ये ते परेतरे तान् परेतरान् ४ क्रियायाः कृत्यस्य अपवर्गाः कार्य्यसमाप्तयः, तेषुक्रियापवर्गेषु ५ कृतम् उपकृतम् जानाति स्वीकरोति यः सः कृतज्ञः कृतज्ञस्यभावः कृतज्ञता ताम् कृतज्ञताम्. ( कृत×ज्ञा×क×तल् )

विश्वस्तवदेव व्यवहरणपरमुखेनैव पराभिनक्तीत्यर्थः ॥ क्रियापवर्गेषु = कर्मसमाप्तिषु । अनुजीविसात्कृताः = भृत्याधीनाकृताः। सम्पदः = विभवाः । अस्य = राज्ञो दुर्योधनस्य। कृतज्ञताम् = उपकारित्वम् । वदन्ति = प्रकाशयन्तीत्यर्थः ॥

अनारतं[1] तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः[2]। फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसम्पदः ॥ १५ ॥

तेन = अमुना राज्ञा दुर्योधनेन । पदेषु = उपादेयवस्तुषु। सम्यक् = यथाहि । विभज्य = विविच्य । विनियोगएव = विशेषनियोगएव । सत्क्रिया = अनुग्रहः । सत्कार इतियावत् । यासांताः । लम्भिता = स्थानेषु सम्यक्प्रयुक्ता इत्यर्थः । उपायाः = सामादयः । सङ्घर्षम् = परस्परस्पर्धम् । उपेत्येव = संप्राप्येव । परिबृंहितायतीः = प्रचितोत्तरकालाः। स्थिरा इत्यर्थः । अर्थसम्पदः = धनविभवाः । अनारतम् = अजस्रम् । फलन्ति = प्रसुवते ॥ १५ ॥

अनेकराजन्यरथाश्वसंकुलं[3] तदीयमास्थाननिकेतनाजिरम् । नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ॥ १६ ॥

अयुग्मच्छदस्य = सप्तपर्ण पुष्पस्य गन्ध इव गन्धो यस्यासावयुग्मच्छदगन्धिः । नृपाणाम् = राज्ञाम् । उपायनानि- उपहारभूताः=ये दान्तिनः = हस्तिनस्तेषां मदः = दानवारि।

---

१-न आरतम् , अनारतम्-सततम् ( आ×रम्×क्तः, ततोनञ् समास )

२ विनियोगस्य नियोजनस्य सत्क्रियाः विनियोगसत्क्रियाः ।

३ नएकेऽनेके, अनेकेच ते राजन्या अनेकराजन्या स्तेषामनेकेषां राजन्यानाम् रथाश्वाऽश्वाश्चरथाश्वम्-तेन रथाश्वैर्संकुलं व्याप्तमिति यावत् ॥

अनेकेषाम् = बहूनाम् । राजन्यानाम् = क्षत्रियाणाम् । रथाश्वेन = स्यन्दतुरंगेण । संकुलम् = व्याप्तम् । तदीयम् = तस्येदम् । आस्थाननिकेतनाजिरम् = सभामण्डपाङ्गणम् । भृशम् = अत्यर्थम् । आर्द्रताम् = पाङ्किलत्वम् । नयति = प्रापयति ॥ १६ ॥

सुखेनलभ्यादधतः कृषीवलैरकृष्टपच्याइवसस्यसम्पदः। वितन्वातिक्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासते ॥ १७ ॥

चिराय = बहुकालपर्यन्तम् । तस्मिन् = दुर्योधने । क्षेमम् कल्याणम् । वितन्वाति = करसति । देवः = पर्जन्यएव माता = अम्बा । येषांतेदेवमातृकाः = वृष्ट्यम्बु जीविनांदेशास्तेनभवन्तीत्यदेवमातृकाः।कुरवः = कुरूणांनिवासाः कुरवोजनपदविशेषाः । अकृष्टपच्याः = कृष्टेनहलेन पच्यन्तेइति कृष्टपच्याः तद्विपरीता अकृष्टपच्याइव।कृषीवलैः = कृषकैः। सुखेन = अक्लेशेन । लभ्याः = लब्धुं शक्याः । सस्यसम्पदः = वृक्षादीनां फलानि।दधतः = धारयन्तः। चकासते= सर्वोत्कर्षेण शोभन्त इत्यर्थः ॥ १७ ॥

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया। स्वयं प्रदुग्धेऽस्यगुणैरुपस्नुता वसू-

---

१ कृषिरर्थेषामस्तीतिते कृषीवलास्तैः कृषीवलैः,कृषिशब्दाद्रजः कृष्यासुतिपरिषदोवलच् इतिवलच् प्रत्ययः वले इतिदीर्घत्वम् ॥

२ उदारा, उत्कृष्टा, कीर्तिः, यशः, यस्य—असौ, उदारकीर्तिः, तस्य, उदारकीर्तेः ॥

३ अभिसमन्ताद्रक्षा=अभिरक्षा तया अभिरक्षया ॥

४–वसुधनमुपमानमुपमायस्याःसौवसूपमानस्तस्य वसूपमानस्य ॥

पमानस्यवसूनि [1]मेदिनी ॥ १८ ॥

उदारकीर्तेः = महायशसः । दयावतः = परदुःखप्रहरणेच्छोः । अतएव प्रशान्तबाधम् = प्रशमितोपद्रवम्, यथास्यात्तथेति क्रियाविशेषणम् । अभिरक्षया = सर्वतस्त्राणेन । उदयम् = वृद्धिम् । दिशतः = अवलोकयतः । वसूपमानस्य = कुबेरतुल्यस्य । अस्य = दुर्योधनस्य । गुणैः = दयादाक्षिण्यादिभिः । उपस्नुता = द्राविता । मेदिनी = पृथिवी । वसूनि = धनानि । स्वयम् = आत्मनैव । प्रदुग्धे = अक्लेशेन दुह्यतइत्यर्थः ॥ १८ ॥

महौजसो[2] मानधनाधनार्चिता धनुर्भृतः संयति लब्धकीर्त्तयः । नसंहतास्तस्य नभिन्नवृत्तयः प्रियाणिवाञ्छन्त्यसुभिःसमीहितुम् ॥ १९ ॥

महौजसः = महाबलाः । मानधनाः = ( मानः कुलशीलाद्यभिमानएव धनं येषां तेमानधनाः ) । धनार्चिताः = ( धनैरर्चिताः धनार्चिताः ) सत्कृताः । संयति = संग्रामे । लब्धकीर्तयः = बहुयशस इत्यर्थः । संहताः = मिथः संगताः । स्वार्थनिष्ठा नभवन्तीति न संहताः । भिन्नवृत्तयः मिथोविरोधात् स्वामिकार्यविघातकरा नभवन्तीति न भिन्नवृत्तयः । धनुर्भृतः = धानुष्काः । तस्य = दुर्योधनस्य । असुभिः = प्राणैः । प्रियाणि = मनोहराणि कृत्यानि । समीहितुम् = कर्तुम् । वाञ्छन्ति = ईहन्ते ॥ १९ ॥

---

१–मेदो यस्य अस्तीति । मेदश्शब्दादिनिप्रत्ययः, ततः, ऋन्नेभ्योङीप् ॥
२ महन्ति बृहन्ति ओजांसि बलानि येषांते महौजसः ।

महीभृतां[1] सच्चरितैश्चरैः[2] [3] क्रियाः स वेद निःशे- षमशेषितक्रियः । महोदयैस्तस्य[4] हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥ २० ॥

अशेषितक्रियः = समापितकृत्यः । ( आफलोदयकर्मेत्यर्थः ) सः = असौ दुर्योधनः । सच्चरितैः = शुद्धाचारैः । ( अवञ्चकैरित्यर्थः ) चरैः = प्रणिधिभिः । महीभृताम् = राज्ञाम् । क्रियाः = प्रारम्भान् । निःशेषम् = सकलम् । वेद = वेत्ति । धातुरिव तस्य = दुर्योधनस्य । उद्योगः । महोदयैः = महासमृद्धिभिः । हितानुबन्धिभिः = स्वन्तैरित्यर्थः । फलैः = कार्य्यसिद्धिभिः । प्रतीयते=ज्ञायते २० ॥

नतेनसज्यंक्वचिदुद्यतं धनुः कृतनवाकोप विजिह्ममाननम्[5]। गुणानुरागेण[6] शिरोभिरुह्यते नराधिपैर्[7]माल्यमिवास्य शासनम् ॥ २१ ॥

तेन = राज्ञा दुर्योधनेन। क्वचित् = कुत्रापि । सज्यम् = सहज्यया मौर्व्या। धनुर्नोद्यतम् = नोर्ध्वीकृतम्। आननंवा = वदनंवा । कोपविजिह्मम् = क्रोधकुटिलम् । नकृतम् = ना- अकारि । गुणेषु = दयादाक्षिण्यादिषु। अनुरागेण = प्रेम्णा। नराधिपैः = नृपैः। अस्य = दुर्योधनस्य। शासनम् = आज्ञा।

---

१–महीं पृथ्वीं बिभ्रति ते महीभृतः–तेषां महीभृताम् ॥

२ सन्ति, सत्यानि, चरितानि,चरित्राणि, तानिसच्चरितानि तैःसच्चरितैः।

३ चरन्तीतिचराः पचाद्यच् तैश्चरैः ॥

४–महान् उदयः उन्नतिर्येषां तानि महोदयानि तैर्महोदयैः ॥

५–कोपेन, क्रोधेन, विजिह्मं, विशेषवक्रं कोपविजिह्मम् ॥

६–गुणानामनुरागः प्रीतिः गुणानुरागस्तेन गुणानुरागेण ॥

७–नराणामधिपा नराधिपास्तैर्नराधिपैः ॥

माल्यमिव = मालेव । शिरोभिः = उत्तमाङ्गैः । उह्यते = धार्य्यते ॥ २१ ॥

सयौवराज्ये नवयौवनोद्धतं निधायदुःशासन-मिद्धशासनः । मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ।। २२ ॥

इद्धशासनः = अप्रतिहताज्ञः । सः = असौदुर्योधनः । नवयौवनोद्धतम् = नवीनतारुण्यप्रगल्भम् । दुःशासनम् = दुःखनशास्यत इति दुःशासनस्तं स्वकनिष्ठभ्रातरम् ॥ यौवरा-ज्ये = युवराजकर्माणि निधाय = नियुज्येत्यर्थः । पुरोधसा= पुरोहितेन । अनुमतः = अनुज्ञातः । अखिन्नः = अनलसः । मखेषु = क्रतुषु । हव्येन = हविषा । हिरण्यरेतसम् = ( हि-रण्यं रेतोयस्य तं हिरण्यरेतसम् ) अनलम् । धिनोति = प्रीणयति ॥ २२ ॥

प्रलीनभूपालमपि स्थिरायति प्रशासदावा रिधि मण्डलं भुवः । सचिन्तयत्येव भियस्त्वदेष्य-ती रहो ! दुरन्ता बलवद्विरोधिता ॥ २३ ॥

सः=दुर्य्योधनः । प्रलीनभूपालम् = निः सपत्नमित्यर्थः । स्थिरायती = चिरस्थायीत्यर्थः । भुवः=वसुमतः । मण्ड-लम् = गोलः । आवारिधि = आसागरेभ्यः । प्रशासदपि= आज्ञापयन्नपि । त्वत् = त्वत्तः । एष्यतीः = आगमिष्यतीः । भियः = भयहेतून् । विपद इत्यर्थः ॥ चिन्तयत्येव = आ-लोचयत्येव । अहो ! = आश्चर्यम् । बलवद्विरोधिता = प्रबलैस्सह वैरम् । दुरन्ता = दुष्टावसानाभवति ॥ २३ ॥

---

१=नवंच तद्यौवनं तारुण्यं नवयौवनम् । तेनोद्धतः अवनीतस्तम् ॥

कथा प्रसङ्गेन[1] जनैरुदाहृतादनुस्मृता खण्डै[2]-
लसूनुविक्रमः । तवाभिधानाद्व्यथते नताननः
सुदुःसहान्मन्त्रपदादिवोरगः ॥ २४ ॥

कथाप्रसंगेन = गोष्ठीवचनेन । जनैः = भृत्यैः । उदाहृता-
त् = उच्चारितात् । तव = भवतो युधिष्ठिरस्य । अभिधाना-
त् = नामधेयात् स्मरणाद्धेतोः । अनुस्मृताखण्डलसुनु विक्र-
मः = स्मृतार्जुन पराक्रमःसन् । सुदुःसहात् = अतिदुःखात् ।
मन्त्रपदात् = मन्त्रशब्दात् स्मारकाद्धेतोः । उरगइव = सर्प-
इव । नताननः सन् = नतवदनःसन् । व्यथते = दुःखायते ॥

तदाशु कर्त्तुं त्वयि जिह्ममुद्यते विधीयतां
तत्र विधेय[3]मुत्तरम् । परप्रणीतानि वचांसि चि-
न्वतां प्रवृत्ति सारा खलु मादृशांगिरः ॥ २५ ॥

तत् = तस्माद्धेतोः त्वयि = भवतियुधिष्ठिरे । जिह्मम् =
= कपटम् । कर्तुम् = करणाय । उद्यते = सन्नद्धे (त्वां जि-
घांसा वित्यर्थः ) तत्र = तस्मिन् दुर्योधने । विधेयम् = कर्त-
व्यम् । उत्तरम् = प्रतिक्रिया । आशु = शीघ्रम् । विधीयता-
म् = क्रियताम् । परप्रणीतानि = परोक्तानि । वचांसि =
वाक्यानि । चिन्वताम् = गवेषयताम् । मादृशाम् = वार्ता-
हारिणामित्यर्थः गिरः = वाचः । प्रवृत्तिसाराः = वार्ता-
मात्रसाराः खलु ॥ २५ ॥

---

१—कथायां वार्तायां प्रसङ्गः प्रसक्तिः, असौ कथाप्रसङ्गः = तेन कथाप्रसङ्गेन ॥
२ -अनुपश्चात् स्मृतः स्मृती कृतः, आखण्डलस्य इन्द्रस्य सूनोरर्जुनस्य विक्रमः
शौर्यं येन सः ॥
३—विधातुं योग्यं विधेयम् । ( वि×धा×अचोयत्, इतियत् प्रत्ययः, ईद्
यति आत ईत )

इतीरयित्वा गिरमात्तसत्क्रिये[1] गतेऽथ पत्यौ वनसंनिवासिनाम्[2]। प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ॥ २६ ॥

वनसंनिवासिनाम् = विपिनसंस्थानाम्। पत्यौ = वनचराधिप इति। गिरम् = वचनम्। ईरयित्वा = उक्त्वा। आत्तसत्क्रिये = गृहीतपारितोषिके। गतसति = यातेसति। अथ = अनन्तरम्। महीभुजा = राज्ञा। कृष्णासदनम् = द्रौपदीभवनम्। प्रविश्य = प्रवेशंविधाय। अनुजस्य = भ्रातुः। सन्निधौ = समीपे। तद् वनेचरोक्तम्। वचः = वचनम्। आचचक्षे = आख्यातम् ॥ २६ ॥

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा। नृपस्यमन्युव्यवसायदीपिनी[3]रुदाजहार द्रुपदात्मजा गिरः ॥ २७ ॥

अथद्रुपदात्मजा = ( द्रुपदस्य आत्मजा द्रुपदात्मजा ) द्रौपदी। द्विषताम् = अरीणाम्। सिद्धिम् = वृद्धिरूपाम्। निशम्य = आकर्ण्य। ततः = तदनन्तरम्। ततस्त्याः = द्विषद्भ्यः आगताः। अपाकृतीः = विकारान्। विनियन्तुम् = निरोद्धुम्। अक्षमा = अतितिक्षामति। नृपस्य = युधिष्ठिरस्य। मन्युव्यवसाययोः = क्रोधोद्योगयोः। दीपिनीः = संवर्धिनीः। गिरः = वाक्यानि। उदाजहार = जगाद ॥ २७ ॥

---

१—आत्ता गृहीता सत्क्रिया सम्मानम् येनाऽसावात्तसत्क्रियाः, तस्मिन्नात्तसत्क्रिये।

२—वनेसान्निवस्तुं शीलं येषां ते वनसन्निवासिनः, तेषांवनसन्निवासिनाम्।

३—मन्युश्च व्यवसायश्च मन्युव्यवसायौ तयोर्मन्युव्यवसाययोः, तौदीप्यते याभिरिति दीपिन्यस्तादीपिनीः ॥

द्रौपद्युवाच।

भवादृशेषु प्रमदाजनोदितं[1] भवत्यधिक्षेप-इवानुशासनम्। तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारी[2] समयादुराधयः ॥ २८ ॥

भवादृशेषु = भवद्विधेषु पण्डितेषु। प्रमदाजनोदितम् = अबलाजनोक्तम्। अनुशासनम् = नियोगवचनम्। अधिक्षेपः = तिरस्कार इव। भवति = जायते (अतोनयुक्तं वक्तुमित्यर्थः) तथापि = वक्तुमनुचितत्वेऽपि। निरस्तनारीसमयाः = त्याजितशालीनतारूपस्त्रीसमाचाराः। दुराधयः = दुष्टापमनोव्यथाः। माम् = द्रौपदीम्। वक्तुम् = निगदितुम्। व्यवसाययन्ति = प्रेरयन्ति ॥ २८ ॥

अखण्डमाखण्डल[3]तुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः। त्वयात्महस्तेन महीमदच्युता मतङ्गजेन स्रगिवापवर्जिता ॥ २९ ॥

आखण्डलतुल्यधामाभिः = इन्द्रसदृशप्रभावैः। स्ववंशजैः = स्वीय कुटुम्बजैः। भूपतिभिः = भरतादिभिः। चिरम् = बहुकालपर्यन्तम्। अखण्डम् = अविच्छिन्नम्। धृता = स्थापिता। मही = वसुमती। त्वया = युधिष्ठिरेण। मदच्युता = मदस्राविणा। मतङ्गजेन = हस्तिना। स्रगिव =

---

१-प्रमदाजनेनोदितं प्रमदाजनोदितम्।

२-निरस्ता तिरस्कृता नारी = निरस्तनारी = निरस्तनार्य्याः समयाः समाचाराः = निरस्तनारीसमया ॥

३-आखण्डलस्य इन्द्रस्य तुल्यानि सदृशानि धामानि येषांते आखण्डलतुल्यधामानः। तैः, आखण्डलतुल्यधामभिः ॥

मा क्षेव । आत्महस्तेन = स्वपाणिना । अपवर्जिता = परिहृता त्यक्तेत्यर्थः ॥ २९ ॥

व्रजन्ति ते मूढधियः[1] पराभवं भवन्तिमायाविषु[2] येनमायिनः । प्रविश्यहि घ्नन्तिशठास्तथाविधान संवृताङ्गा[3]निशिताइवेषवः ॥ ३० ॥

मूढधियः = निर्विवेकबुद्धयः । ते = अमीनराः । पराभवम् = तिरस्कारम् । व्रजन्ति = प्राप्नुवन्ति । ये = मानवाः । मायाविषु = व्याजिषु । मायाविनः = मायावन्तः । न = नहिभवन्ति । शठाः = अपकारिणोधूर्ताः । तथाविधान् = अकुटिलान् । असंवृताङ्गान् = अवर्मितशरीरान् । निशिताः = निशाताः । इषवः = शराइव । प्रविश्य = प्रवेशंविधाय आत्मीयाभूत्वा । घ्नन्ति हि = मारयन्ति खलु ॥ ३० ॥

गुणानुरक्ता[4] मनुरक्तसाधनः[5] कुलाभिमानी कुलजांनराधिपः । परैस्त्वदन्यः कइवापहारयेद् मनोरमा[6]मात्मवधूमिव श्रियम् ॥ ३१ ॥

अनुरक्तसाधनः = अनुकूलसहायवान् । कुलाभिमानी = क्षत्रियकुलस्वाभिमानी कुलीनत्वाभिमानीच । त्वदन्यः = त्वत्तोऽन्यः । कइव = कस्तथा । नराधिपः = नृपः । गुणैः =

---

१- मूढा—निर्विवेकाधीर्मतिर्येषां ते मूढधियः ॥

२— प्रशस्तामाया कापट्यंयेषामस्तितेमायाविनः- तेषुमायाविषु (माया×अस्मायामेधास्रजोविनिः । " इतिविनिप्रत्ययः ॥

३ नसंवृतानि असंवृतानि असंवृतानि अनाच्छादितानि, अङ्गानि येषां ते असंवृताङ्गाः - तान् असंवृताङ्गान् ॥

४ गुणैरनुरक्ता गुणानुरक्ता ता म् ॥

५--अनुरक्तानिसाधनानियस्यासौ = अनुरक्तसाधनः ॥

६--मनःस्वान्तंरमयतीति मनोरमा तां मनोरमाम् ।

सन्ध्यादिभिः सौन्दर्य्यादिभिश्च । अनुरक्ताम् = अनुरागिणीम् । कुलजाम् = कुलक्रमादागतां कुलीनां च । मनोरमाम् = मनोरुचिराम् । श्रियम् = विभूतिम् । आत्मवधूमिव = स्वभार्य्यामिव = परैः = अरिभिरन्यैश्च । अपहारयेत् = स्वयमेवापहारं कारयेदित्यर्थः ॥ ३१ ॥

भवन्तमेतर्हि मनस्विगर्हिते[1] विवर्तमानं नरदेव वर्त्मनि । कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ ३२ ॥

हे नरदेव! = हे नरेन्द्र! । एतर्हि = साम्प्रतम् । ( अस्मिन्नापत्कालेऽपीत्यर्थः ) मनस्विगर्हिते = शूरजुगुप्सिते । वर्त्मनि = मार्गे । विवर्तमानम् = शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः । भवन्तम् = त्वाम् । उदीरितः = उद्दीपितः । मन्युः = क्रोधः । शुष्कम् = नीरसम् । शमीतरुम् = सक्तुफलावृक्षम् । उच्छिखः = उद्गतज्वालः । अग्निरिव = वह्निरिव । कथम् = केन प्रकारेण । न ज्वलयति = नोदाहयति ॥ ज्वलयितुमुचितमित्यर्थः ॥ ३२ ॥

अवन्ध्यकोपस्य[2] विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः[3] । अमर्षशून्येन[4] जनस्य जन्तुना न जातहार्देन[5] न विद्विषादरः ॥ ३३ ॥

---

१ प्रशस्तं मनो येषां ते मनस्विनः तैर्गर्हितं निन्दितं मनस्विगर्हितम् । तस्मिन् मनस्विगर्हिते ॥

२-न वन्ध्योऽवन्ध्यः-अवन्ध्यः कोपो यस्याऽसाववन्ध्यकोपः-तस्याऽवन्ध्यकोपस्य ॥

३-देहो यस्यास्तीति-देही-तस्य देहिनः ।

४-अमर्षेण क्रोधेन शून्यो रिक्तः-अमर्ष शून्यः-तेनाऽमर्षशून्येन ॥

५-जातम् उत्पन्नम् हार्द्रम् स्नेहः-तज्जातहार्द्रम् तेन जातहार्देन ॥

अवन्ध्यकोपस्य = अवन्धनीयक्रोधस्य । आपदाम् = विपदाम् । विहन्तुः = निग्रहानुग्रह समर्थस्येत्यर्थः । देहिनः = जन्तवः । स्वयमेव = आत्मना । वश्याः = वशंगताः । भवन्ति = जायन्ते । अमर्षशून्येन = निःकोपेन । जन्तुना = जीवेन । जातहार्देन = उत्पन्नस्नेहेनसता । जनस्य = नरस्य । आदरः = सम्मानः । नविद्विषा = नाहि द्विषता च सतादरोन ॥

परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरिरेणुरूषितः । महारथः सत्यधनस्यमानसं दुनोति नो कच्चिदयं वृकोदरः ॥ ३४ ॥

लोहितेन = रक्तेन । चंदनन = मलयजेन । उचितः = अन्वितः । महारथः = रथचारी । अद्य तु रेणुरूषितः = धूलिव्याप्तः । पदातिः = चरणचारी । अन्तर्गिरिः = गिरिष्वन्तः । परिभ्रमन् = विचरनसन् । अयम् = एषः । वृकोदरः = भीमसेनः । सत्यधनस्य = तवयुधिष्ठिरस्य । मानसम् = मनः । कच्चिन्नादुनोति = कथं नपरितापयति ३५॥

विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः । सवल्कवासांसि तवाधुनाहरनकरोति मन्युं न कथं धनञ्जयः ॥ ३५ ॥

वासवोपमः = इन्द्रतुल्यः । योधनञ्जयः = धनंजयतीति धनंजयोऽर्जुनः । उत्तरान्कुरून् = मेरोरुत्तरान्मानुषान्देशविशेषान् । विजित्य = जयीकृत्वा । प्राज्यम् = प्रचुरम् । अकुप्यम् = हेमरूप्यात्मकम् । वसु = धनम् । अयच्छत् = दत्त-

१--सत्यंतथ्यं धन वित्तं यस्याऽसौ—सत्यधनः--तस्य सत्यधनस्य ॥

२--वृकस्योदरमिवोदरं यस्याऽसौवृकोदरः ।

३ वासवः-इन्द्र-उपमा-सादृश्यम् यस्याऽसौ-वासवोपमः ॥

वान् । सः = असौ । धनंजयः = अर्जुनः । अधुना = इदानीम् वल्कवासांसि = वल्कलवस्त्राणि । आहरन् = धारयन् । कथम् = केन प्रकारेण । तव = भवतो युधिष्ठिरस्य मन्युम् = क्रोधं दुःखं वा । नकरोति = नोकुरुते ॥ ३५ ॥

वनान्तशय्या कठिनीकृताकृती कचाचितौ विश्वगिवागजौ गजौ । कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥ ३६ ॥

वनान्तः = वनभूमिरेव । शय्या = शयनीयम् । तथा कठिनीकृताकृती = कठिनीकृतदेहौ । विश्वक् = समन्तात् । कचाचितौ = केशव्याप्तौ । विशीर्णकेशावित्यर्थः । अतएवाऽगजौ = गिरिसंभवौ । गजाविव = नागाविव । एतौ = इमौ । यमौ = युग्मजातौ । माद्रितनयावित्यर्थः । विलोकयन् = पश्यन् सन् । त्वम् = भवान् युधिष्ठिरः । कथम् = केनप्रकारेण । धृतिसंयमौ = सन्तोषनियमौ । बाधितुम् = पीडां कर्तुम् । नोत्सहसे = नोप्रवर्तसे ॥ ३६ ॥

इमामहं वेद न तावकींधियं विचित्ररूपाः खलुचित्तवृत्तयः । विचिन्तयन्त्या भवदापदं परां रुजान्तिचेतः प्रसभं ममाधयः ॥ ३७ ॥

इमाम् = एतां वर्त्तमानाम् । तावकीम् = त्वदीयाम् । धियम् = मतिम् । अहम् = द्रौपदी । नवेद = नोवेद्मि । चित्तवृत्तयः =

---

१. अकठिना कठिनाकृता इति कठिनीकृता कठिनीकृता कृतीययोस्तौ कठिनीकृती । कृभ्वस्तियोगे सम्पद्यकर्तरिच्विः । इतिच्विप्रत्ययः । अस्य स्वावितत्विम् ॥

२—तवेयं तावकी तां तावकीम् । तस्येदमित्यण् । तवकममकावेकवचनेइति तवकादेशः तद्धितेष्वचामादे रित्यचामादे रचोवृद्धिः । टिड्ढाणञित्यादिना ङीप्प्रत्ययः ॥

मनोवर्धनानि । विचित्ररूपाः = नानावेषधारिणः । खलु परम् = उत्कृष्टाम् । भवदापदम् = तवविपदम् । विचिन्तयन्त्याः = भावयन्त्याः । मम = द्रौपद्याः । चेतः = चित्तम् । आधयः = मनोव्यथाः । प्रसभम् = प्रसह्य । रुजन्ति = भजन्ति ॥

पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतमङ्गलैः । अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥ ३८ ॥

यः = त्वयुधिष्ठिरः । महाधनम् = बहुमूल्यंश्रेष्ठम् । शयनम् = शय्याम् । अधिरूढः = आरूढः सन् । स्तुतिगीतमंगलैः = स्तुतयः प्रशंसागीतयश्च गानानिच ता एव मंगलानि शुभानि तैः करणभूतैः । पुरा = प्राग् । विबोध्यसे = जागर्यसे वैतालिकैरितिशेषः । सः = असौत्वम् । अदभ्रदर्भाम् = बहुकुशाम् । स्थलीम् = अकृत्रिमभूमिम् । अधिशय्य = शयित्वा । अशिवैः = अमङ्गलैः । शिवारुतैः = क्रोष्टुवाशितैः । निद्राम् = संवेशम् । जहासि = त्यजसि ॥ ३८ ॥

पुरोपनीतं नृप ! रामणीयकं[1] द्विजातिशेषेण[2] यदेतदन्धसा । तदद्य ते वन्यफलाशिनः[3] परं परैति कार्श्यं यशसा समं वपुः ॥ ३९ ॥

हे नृप ! = हे राजन् ! यदेतत् = पुरोवर्ति । वपुः = शरीरम् । द्विजातिशेषेण = विप्रभुक्तावशिष्टेन । अन्धसा = अन्नेन । रामणीयकम् = मनोहरत्वम् । उपनीतम् = प्रापितम् ।

---

१—रमणीयस्य भावो रमणीयकम् ॥

२—द्विजातिभिः = विप्रैः—शेषम्—अवशिष्टम्—द्विजातिशेषम्—तेन द्विजातिशेषेण ॥

३—वनेभवानि वन्यानि—वन्यानिच तानिफलानि—वन्यफलानि = वन्यफलानि अशितुं शील यस्याऽसौ वन्यफलाशी तस्य वन्यफलाशिनः ॥

अद्य = इदानीम् । वन्यफलाशिनः = अरण्यफलखादिनः । ते = तव युधिष्ठिरस्य तद्वपुः । यशसा = कीर्त्या साकम् । परम् = अतिमात्रम् । कार्श्यम् = कृशताम् । परैति = प्राप्नोति । उभयमपि क्षीयत इत्यर्थः ॥

अनारतं यौ मणिपीठशायिना[1] वरञ्जयद्राजशिरःस्रजां[2] रजः । निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु[3] बर्हिषाम् ॥ ४० ॥

अनारतम् = अजस्रम् । मणिपीठशायिनौ = मणिमयपादपीठस्थायिनौ । यौ चरणौ = पादौ । राजशिरःस्रजाम् = नमद्भूपालमौलिमालानाम् । रजः = परागः । अरञ्जयत = हर्षमागमयत् । तौ ते = चरणौ । मृगैः = हरिणैः । द्विजैश्च = तपस्विभिश्च । आलूनशिखेषु = छिन्नाग्रेषु । बर्हिषाम् = कुशानाम् । वनेषु = अरण्येषु । निषीदतः = तिष्ठतः ॥ ४० ॥

द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः । परैरपर्यासितवीर्यसंपदां पराभवोऽप्युत्सव एव मानिनाम्[4] ॥ ४१ ॥

यत् = यतःकारणात् । इयम् = एषा । दशा = अवस्था । द्विषन्निमित्ता = द्विषन्तो वैरं कुर्वन्तो निमित्तं हेतुकम् । यस्याः सा । ततः = तस्माद्धेतोः । मे = मम । मनः = स्वान्तम् । समूलम् = साशयम् । उन्मूलयतीव = उत्पाटयतीव । परैः =

1 मणीनां रत्नानां ( पेठन्त्युपविशन्त्यस्मिन्निति पीठः ) = विष्टरः तत्र शायितुं शीलं ययोस्तौ मणिपीठशायिनौ । 2 राज्ञां भूपालानां शिरसां मस्तकानां स्रजः मालाः, ता राजशिरःस्रजः तासां राजशिरःस्रजाम् । 3 मृगैर्द्विजैश्च, आलूना छिन्ना शिखा येषां ते मृगद्विजालूनशिखास्तेषु मृगद्विजलूनशिखेषु ॥

4 मानो येषामस्तीति ते मानिनः तेषां मानिनाम् ॥

अभिभिः । अपर्य्यासितवीर्य्यसम्पदाम् = पर्य्यासितापर्य्यावर्तिता वीर्य्यसम्पद्येषां तेषां । मानिनाम् = अहंकारिणाम् । पराभवः = तिरस्कारः । विपदप्युत्सव एवेति ॥ ४१ ॥

विहाय शान्तिं नृप ! धाम तत्पुनः प्रसीद संधेहि वधाय विद्विषाम् । व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥ ४२ ॥

हे नृप ! = हे राजन् युधिष्ठिर ! शान्तिम् = उपशमम् । विहाय = त्यक्त्वा । तत् = अदः प्रसिद्धम् । धाम = तेजः । विद्विषाम् = अरीणाम् । वधाय = मारणाय । पुनः = पश्चात् । संधेहि = अङ्गीकुरु । प्रसीद प्रसन्नतां गच्छ । निःस्पृहाः = निरिच्छाः । मुनयः = साधवः । शत्रून् = अरीन् । अवधूय = निर्जित्य । शमेन = क्रोधवर्जनेन । सिद्धिम् = ऋद्धिम् । व्रजन्ति = यान्ति । भूभृतः = राजानस्तु । न = नो ॥

पुरःसरा धामवतां यशोधनाः[1] सुदुःसहं प्राप्य निकारमीदृशम् । भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त ! हता मनस्विता ॥ ४३ ॥

धामवताम् = तेजस्विनाम् । पुरःसराः = मुखराः । यशोधनाः = कीर्तिवित्ताः । भवादृशाः = भवतुल्याः । सुदुःसहम् = अतीव दुःसहम् । ईदृशम् = उक्तप्रकारम् । निकारम् = पराभवम् । प्राप्य = उपलभ्य । रतिम् = सन्तोषम् । अधिकुर्वते = स्वीकुर्वते । चेत् = तर्हि । हन्त खेदे । मनस्विता = अभिमानता । निराश्रया = निराश्रया सती हता = नष्टीभूता ॥ ४३ ॥

---

१-यशः कीर्तिरेव धनं वित्तं येषां ते—यशोधनाः

अथक्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् । विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः संजुहुधीह पावकम् ॥ ४४ ॥

अथ = पक्षान्तरे । निरस्तविक्रमः = त्यक्तपराक्रमः सन् । चिराय = अनल्पकाले नापि । क्षमाम् = क्षान्तिमेव । सुखस्य = आनन्दस्य । साधनम् = उपायम् । पर्येषि = अवगच्छसि । तर्हि लक्ष्मीपतिलक्ष्म = राजचिन्हम् । कार्मुकम्=धनुः । विहाय = संत्यज्य । जटाधरः = सजटाधरः सन् । इह = वने । पावकं जुहुधि अग्निहोमं कुर्वित्यर्थः ॥ ४४ ॥

न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः । अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ॥ ४५ ॥

परेषु = अरिषु । निकृतिपरेषु = कुत्सिततत्परेषु सत्सु । भूरिधाम्नः = महौजसः । प्रतीकाराक्षमस्य । ते = तव युधिष्ठिरस्य समयस्य = त्रयोदश वर्षकालस्य । परिरक्षणम् = प्रतीक्षणम् । नक्षमम् = नोयुक्तम् हि = यस्मात् । विजयार्थिनः = विजिगीषवः । क्षितीशाः = राजानः । अरिषु = शत्रुविषये । सोपधि = सकपटम् । यथातथा । सन्धिदूषणानि विदधति = केनचिच्छद्मनादोषमापाद्य संधिं दूषयन्ति ॥ ४५ ॥

विधि समयनियोगाद् दीप्तिसंहारजिह्मम् ,
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ

---

१-. लक्ष्म्याः श्रियाः पतिः स्वामी लक्ष्मीपतिः लक्ष्मीपते र्लक्ष्म = लक्ष्मीपतिलक्ष्म ॥

दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥ ४६ ॥

विधिः = दैवम् । समयः = कालः । तयोर्नियोगात् = नियमहेतोः । अगाधे = दुस्तरे । आपत्पयोधौ = विपत्सागरे । दिनकृतमिव = दिवसकर्तारमिव । मग्नम् = बुडितम् । दीप्तिः = प्रतापः । आतपः तस्यासंहारेण । जिह्मम् = अप्रसन्नम् । शिथिलवसुम् = शिथिलधनम् । अन्यत्र शिथिलरश्मिम् । रिपुतिमिरम् = रिपूंस्तिमिरमिवेति । उदस्य = निरस्य । उदीयमानम् = उद्गच्छन्तम् । त्वाम् = धर्मराजम् । दिनादौ = दिवसादौ ( दिनकृतमिव ) लक्ष्मीः = श्रीः । भूयः = पुनरपि । समभ्येतु = भजतु । मालिनीवृत्तमेतत् ॥ ४६ ॥

इति प्रथमः सर्गः ॥

---

# अथ द्वितीयसर्गः ॥

## भीमसेनोऽवादीत् ।

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् । उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥

अथ = द्रौपदीकथनानन्तरम् । वृकोदरः = भीमः । प्रियया = द्रौपद्या । विहिताम् = अभिहिताम् । मनःप्रियाम् = अभिमतार्थयोगान्मनोहराम् । गरीयसीम् = सारवत्तराम् । गिरम् = वाचम् । निश्चित्य = स्थिरीकृत्य । नृपम् = युधिष्ठिरम् । उपपत्तिमत् = युक्तियुक्तम् । ऊर्जिताश्रयम् = उदारा-

र्थम् । वचनम् = वचः । ऊचे = उक्तवान् । अस्मिन् सर्गे वैतालीयं वृत्तम् ॥ १ ॥

यदवोचतवीक्ष्य मानिनी परितःस्नेहमयेन चक्षुषा । अपिवागधिपस्य दुर्वचं वचनंतद्विदधीत विस्मयम् ॥ २ ॥

मानिनी = क्षत्रियकुलाभिमानवती द्रौपदी । स्नेहमयेन = प्रेमप्रचुरेण । चक्षुषा = ज्ञाननयनेन । परितः = समन्तात् । वीक्ष्य = विविच्य । यद्वचनम् = यद्वाक्यम् । अवोचत = अभाषत । तद्वचनम् = अदोवचः । वागधिपस्य = बृहस्पतेरपि । दुर्वचम् = वक्तुमशक्यम् । अतएव । विस्मयम् = अद्भुतम्।विदधीत = कुरुते सर्वस्येति शेषः ॥ २ ॥

विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः । सतु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्मयः ॥ ३ ॥

विषमोऽपि = दुर्बोधोऽपि (अन्यत्रदुःप्रवेशोऽपि)। नयः = नीतिशास्त्रम् । पयसाम् = सलिलानाम् । आशयइव = ह्रदइव । कृततीर्थः = कृताभ्यासाद्युपायःसन् ।( अन्यत्र जलावतारःसन् ) विगाह्यते = गृह्यते प्रविश्यते च ( किन्तु ) तत्र = नयजलाशये चासः = तादृशोनरः । विशेषदुर्लभः = अत्यन्तदुर्लभः । यः । कृत्यंसन्धिविग्रहादि कार्य्यंस्नानादिकंच । तस्यवर्त्म = मार्गम् । सद् = साधुः । देशकालविरुद्धं यथार्थमित्यर्थःयथातथा । अन्यत्र च गर्तग्राहपाषाणादि रहितम् । उपन्यस्यति = वदाहरति ॥ ३ ॥

परिणामसुखे[1] गरीयसी व्यथकेऽस्मिन् वचसी क्षतौजसाम्[2]। अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यतेगुणः॥ ४ ॥

परिणामः = फलकालः ( परिपाकावस्थाच )। तत्रसु-खे = हिते । गरीयसी = भूयिष्ठे श्रेष्ठेच । क्षतौजसाम् = उ-भयत्रापि क्षीणशक्तीनाम् । व्यथके = युद्धोपोद्बलकत्वाद्भ-यंकरे । अल्पीयसी = अल्पाक्षरे अल्पमात्रे च । अस्मिन् = अमुष्मिन् । वचसि = द्रौपदीवाक्ये । अतिवीर्यवती = अतीवसामर्थ्यवती । भेषजइव = औषधइव । बहुः = अनेकः । गुणः=पानत्राणराज्यलाभादिरारोग्यबलपोषादिश्च दृश्यते ॥ ४ ॥

इयमिष्टगुणाय[3] रोचताम् रुचिरार्थाभवतेऽपिभा-रती । ननुवक्तृविशेषनिःस्पृहा गुणगृह्यावचने विपश्चितः॥ ५ ॥

रुचिरार्था = हितार्थसम्पन्नेति। इयम् = एषा । भारती = द्रौपदी । वाक्यमिष्टगुणाय = गुणग्राहिण इत्यर्थः । भवते = तुभ्यमपि । रोचताम् = स्वदताम् । गुणगृह्याः = गुणपक्षपा-तिनइत्यर्थः । विपश्चितः = विद्वांसः । वचने = विषये । वक्तृ-विशेष = स्त्रीपुंसादि लक्षणे । निःस्पृहाननु = निरास्थाखलु १

चतसृष्वपितेविवेकिनी[4] नृप ! विद्यासुनिरूढि-

---

१-परिणामसुखम्—परिणामसुखम्-तस्मिन्परिणामसुखे ॥

२- क्षतम् क्षीणम्—ओजः, बलं येषां ते क्षतौजसः—तेषां क्षतौजसाम् ॥

३-इष्टोवाञ्छितोगुणः इष्टगुणः-तस्मै इष्टगुणाय ॥

४-विवेको विद्यते यस्यामसौ विवेकिनी । नान्तत्वाद्नेभ्यो ङीप् ॥

मागता। कथमेत्य मतिर्विपर्ययम्, करिणीपङ्कमि-
वावसीदति ॥ ६ ॥

हे नृप ! = हे राजन् ! । चतसृष्वपि विद्यासु = आन्वीक्षिक्यादिषु । निरूढिमागता = प्रसिद्धिंगता । अतएवाविवेकिनी = सदसद्विवेकवती । ते = तव युधिष्ठिरस्य । मतिः = बुद्धिः । कथम् = केनप्रकारेण । करिणी = हस्तिनी । पङ्कमिव = कर्दमइव । विपर्य्ययम् = वैपरीत्यम् । (अविवेकरूपम्) एत्य = संप्राप्य । अवसीदति = नश्यतीत्यर्थः ॥ ६ ॥

विधुरं किमतः परं परैरवगीतां गमिते दशामिमाम्। अवसीदति यत्सुरैरपि त्वयि संभावितवृत्तिपौरुषम् ॥ ७ ॥

त्वयि = भवतियुधिष्ठिरे । परैः = शत्रुभिः । इमाम् = ईदृशीम् । अवगीताम् = गर्हिताम् । दशाम् = अवस्थाम् । गमिते = प्रापिते सति । सुरैरपि = देवैरपि । सम्भावितवृत्ति = बहुकृतप्रसारम् । अथवा निश्चितसद्भावम् । पौरुषम् = पुरुषकारः । अवसीदति = नश्यतीति । यत् । अतः परम् = अतोन्यदधिकम् = किं विधुरम् = किं कष्टम् न किंचिदित्यर्थः

द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः । न महानपि भूतिमिच्छता फलसंपत्प्रवणः परिक्षयः ॥ ८ ॥

भूतिम् = उदयम् । इच्छता = वाञ्छता = । शोभना मेधा यस्य तेन सुमेधसा = सुधिया । गुरुः = महान् । अस्व-

---

१-फलस्य सम्पत्-फलसम्पत्-फलसम्पदः-प्रवणः-फलसम्पत्प्रवणः ॥

रवन्ततरः = अत्यन्तदुरन्तः। क्षयोन्मुखइत्यर्थः। द्विषताम् = शत्रूणाम्। उदयः = वृद्धिः। सुखेन मृष्यत इति सुमर्षणः = सुसहः। उपेक्ष्यइत्यर्थः। महानपि=प्रचुरमपि। फलसम्पत् प्रवणः = फल संपदुन्मुखः। परिक्षयः = विनाशः। नसु-मर्षणः = नोपेक्ष्य इत्यर्थः। अन्यथातूपेक्ष्य इति भावः८

अचिरेणपरस्यभूयसीं विपरीतां विगणय्यचा-
त्मनः। क्षय[1]युक्तिमुपेक्षते कृती कुरुते तत्प्रति-
का[2]रमन्यथा ॥ ९ ॥

कृती = कुशलः। परस्य = अरेः। क्षययुक्तिम् = नाश-योगम्। अचिरेण = आशु भाविनीम्। भूयसीम् = दुरन्ताम् आत्मनः = स्वस्य। विपरीताम्=विरुद्धामल्पीयसीम्। वि-गणय्य = विचार्य्य। उपेक्षते = उपेक्षांकुरुते। अन्यथा = अन्यप्रकारेण। तत्प्रतिकारम् = तस्याः क्षययुक्तेः प्रतिका-रमचिरेण। कुरुते = करोति ॥ ९ ॥

अनुपालयतामुदेष्यतीं प्र[3]भुशक्तिं द्विषतामनी
हया। अपयान्त्यचिरान्महीभुजां ज[4]ननिर्वाद
भयादिव श्रियः ॥ १० ॥

उदेष्यतीम् = वर्धिष्यमाणाम्। द्विषताम् = शत्रूणाम्। प्रभुशक्तिम् = कोशदण्डजंतेजः। अनीहया = अनुत्साहेन। अनुपालयताम् = उपेक्षमाणानाम्। महीभुजाम् = राज्ञाम्।

---

१–क्षयस्य नाशस्ययुक्तिः—क्षययुक्तिः—तंक्षययुक्तिम् ॥

२–तस्याः क्षययुक्त –प्रतिकारःउपायः–तत्प्रतिकारः–ततत्प्रतिकारम् ॥

३ प्रभोःशक्तिः–प्रभुशक्तिः–तंप्रभुशक्तिम् ॥

४ जनानांनिर्वादः–जननिर्वादस्तस्मादभयः–जननिर्वादभयः– तस्माज्जन-निर्वादभयात् ॥

श्रियः = सम्पदः। जननिर्वादभयात् = निकृष्टपुरुषानुरागोत्थलोकापवादभयादिव। आचिरात् = अविलम्बात्। अपयान्ति = अपसरन्ति॥ १०॥

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये। प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्॥ ११॥

क्षययुक्तमपि = क्षीयमाणमपि सन्तम्। स्वभावजम् = सहजम्। शिवम् = सर्वलोकाह्लादकम्। धाम = क्षात्रंतेजः प्रकाशं च। दधतम् = धारयन्तम्। समृद्धये = वृद्ध्यर्थम्। उत्थितम् = उद्युक्तम्। अनपायम् = अविनाशिनम्। नृपम् = राजानम्। प्रजाः = जनाः। प्रतिपच्चन्द्रमिव = द्वितीयाचन्द्रमिवेत्यर्थः। प्रणमन्ति = प्रह्वीभावेन वर्तन्त इत्यर्थः॥ ११॥

प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः। स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते॥ १२॥

कृतपञ्चाङ्गविनिर्णयः[१]। नयः = नीतिः। कोशदण्डयोः = अर्थराशिचतुरङ्गसैन्ययोः। प्रभवः = कारणम्। सः = असौ नयः। विधेयपदेषु = कार्यवस्तुषु। खलु = निश्चयेन। दक्षताम् = क्षिप्रकारित्वम्। लोकः = कृष्यादिप्रवृत्तो जनः। नियतिम् = दैवमिव। अनुरुध्यते = अनुसरति॥ १२॥

---

१—सहायाः साधनोपाया विभागो देशकालयोः। विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते॥ पञ्चानामङ्गानां विनिर्णयः = पञ्चाङ्गविनिर्णयः तद्धितार्थ—इत्यादिनोत्तरपदे समासः। कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः।

अभिमानवतो मनस्विनः प्रियमुच्चैःपदमारुरुक्षतः । विनिपातनिवर्तनक्षमं तममालम्बनमात्मपौरुषम् ॥ १३ ॥

अभिमानवतः = मानधनस्य । प्रियम् = इष्टम् । उच्चैः = उन्नतम् । पदम् = स्थानम् । आरुरुक्षतः = आरोढुमिच्छतः । प्राप्तुकामस्य । मनस्विनः = धीरस्य । आत्मपौरुषम् = स्वपुरुषकारएव । विनिपातनिवर्तनक्षमम् = अनर्थप्रतीकार समर्थम् । आलम्बनम् = सहकारि । तमम् = इष्टतमम् ॥

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियतालघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ १४ ॥

अविक्रमम् = पौरुषहीनम् । विपदः = आपदः । अभिभवन्ति = तिरस्कुर्वन्ति । आपदुपतम् = विपन्नम् । आयतिः = उत्तरकालः । रहयति = त्यजति । निरायतेः = आसन्नक्षयस्येत्यर्थः । लघुता = अगौरवम् । नियता = अवश्यम्भाविनी । अगरीयान् = लघीयान् । नृपश्रियः = राजलक्ष्म्याः । पदम् = आस्पदम् । नभवति ॥१४॥

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायबन्ध्यताम् । निरसन्ति पराक्रमाश्रया नविषादेन समं समृद्धयः ॥ १५ ॥

तत् = तस्मात्कारणात् । उन्नतेः = अभ्युदयस्य । प्रति-

---

१—अभिमानो दर्पो यस्यास्तीति—अभिमानवान्—तस्याभिमानवतः ।

२—प्रशस्तंमनोयस्यास्तीति—मनस्वी—तस्य मनस्विनः ।

३—विशेषेण क्रमतीति—विक्रमः—नविक्रमोऽविक्रमः—तमविक्रमम् ॥

४—व्यवसायस्यबन्ध्यता—व्यवसायबन्ध्यता—ताम् ॥

पक्षम् = अन्तरायम् । व्यवसायवन्ध्यताम् = उद्योगशून्यताम् । अवलम्ब्य = आश्रित्य । अलम् = पर्याप्तम् । पराक्रमः = सामर्थ्यम् । आश्रयः कारणं यासां तास्तथोक्ताः । समृद्धयः = सम्पदः । विषादेन समम् = अनुत्साहेनसाकम् । नाभिवसंति = नातिष्ठन्ति ॥ १९ ॥

अथचेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्म[1]वृत्तिना । धृतराष्ट्रसुतेन[2]सुत्यजाश्चिरमास्वाद्यनरेन्द्रसम्पदः[3] ॥ १६ ॥

अथ = अनन्तरम् । अवधिः = कालः।प्रतीक्ष्यते । चेत् = यदि । आविष्कृतजिह्मवृत्तिना=प्रकटितकपटव्यवहारेण । धृतराष्ट्रसुतेन = दुर्योधनेन । नरेन्द्रसम्पदः = राज्यविभवाः चिरम् = चतुर्दशवर्षाणि । आस्वाद्य = अनुभूय । कथम् = केन प्रकारेण । सुत्यजाः = ज्ञातस्वादनेतन पश्चादपि सुखेन युद्धक्लेशंविना । नत्यक्ष्यते इतिभावः ॥ १६ ॥

द्विषताविहितं त्वयाथवा यदिलब्धा पुनरात्मनःपदम् । जननाथ ! तवानुजन्मनां[4] कृतमाविष्कृतपौरुषै[5]र्भुजैः ॥ १७ ॥

अथवा = पक्षान्तरे । द्विषता = अरिणा । विहितम् =

---

१--आविष्कृताजिह्मावृत्तिर्येनाऽसौ--आविष्कृतजिह्मवृत्तिः--तेनाऽविष्कृतजिह्मवृत्तिना ॥

२--धृतंराष्ट्रराज्यं येनासौ--धृतराष्ट्रः--धृतराष्ट्रस्यसुतः सूनुः--धृतराष्ट्रसुतः--तेन धृतराष्ट्रसुतेन ॥

३ नरेन्द्रस्य सम्पदः--नरेन्द्रसम्पदः--तानरेन्द्रसम्पदः ॥

४ अनुपश्चाज्जन्मोद्भवोयेषांतेऽनुजन्मानः--तेषामनुजन्मनाम् ॥

५ आविष्कृतं पौरुषं यैः---ते आविष्कृतपौरुषाः--तैराविष्कृतपौरुषैः

कृतम् । पुनः = भूयःप्रत्यर्पितम् । आत्मनः = स्वस्य । पदम् = राज्यम् । त्वया = भवता । युधिष्ठिरेण । लब्धा = लप्स्यंत । यदि = चेत् । हे जननाथ! = भोराजन्! तव = भवतः । अनुजन्मनाम् = अनुजानाम् । आविष्कृतपौरुषैः = प्रकटितपराक्रमैः । भुजैः = बाहुभिः । कृतम् = अलम् व्यर्थामितियावत् । अस्मद्भुजैर्न किंचित्साध्यमित्यर्थः ॥१७॥

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं-हतैः । लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १८ ॥

मृगाधिपः = सिंहः । मदसिक्तमुखैः = मदवर्षिभिरित्यर्थः । स्वयम् = आत्मनैव । हतैः = मारितैः । करिभिः = हस्तिभिः । वर्तयते = वृत्तिं करोति । तैरेवजीवतीत्यर्थः । तथाहि । तेजसा = प्रभावेण । जगत् = संसारम् । लघयन् = लघुकुर्वन् । महान् = बहुः । अन्यतः = अस्मात्पुरुषात् । भूतिम् = वृद्धिम् । नेच्छन्तिखलु = नोवाञ्छन्तिहि ॥ १८॥

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः । अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९ ॥

अभिमानधनस्य = वैरिनिर्यातनमात्रनिष्ठस्य । अतएव । गत्वरैः = गमनशीलैः । असुभिः = प्राणैः करणैः । स्थास्नु = स्थिरम् । यशः = कीर्तिम् । चिचीषतः = चेतुं संग्रहीतुमिच्छतः । अचिरम् = शीघ्रम् । अंशवः = प्रभाः यस्याः सा-

---

१—मदेनसिक्तान्यार्द्री कृतानि मुखानि येषाम्—तैर्मदसिक्तमुखाः – तैर्मदसिक्तमुखैः ॥

१ अभिमानोदर्पो धनं यस्य असावभिमानधनः - तस्याऽभिमानधनस्य ॥

चिरांशुः = विद्युत् । तस्याः विकासः = स्फुरणम् । तदवच्छ्रला = क्षणिकेत्यर्थः । लक्ष्मीः = सम्पद् । आनुषङ्गिकम् = अन्वाचयशिष्टमल्पं फलम् । ननु = खलु ॥ १९ ॥

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः । अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ २० ॥

जनः = नरः । भस्मनाम् = दग्धकाष्ठादिविकाराणाम् । चयम् = पुञ्जम् । आस्कन्दति = पादादिनाक्रमति ज्वलितम् = ज्वलन्तम् । हिरण्यरेतसम् = अग्निम् । नास्कन्दति = दाहकत्वादिति भावः । अतो हेतोः । मानिनः = अहङ्कारिणः । अभिभूतिभयात् = प्राणलाभे नतेजस्त्याग परिभवो भवि-ष्यति भयाद् । असूनत = प्राणानिव । सुखम् = अक्लेशम् । उज्झन्ति = त्यजन्ति । धाम = तेजस्तु । नोज्झन्ति ॥ २० ॥

किमपेक्ष्य फलं पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः । प्रकृतिःखलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ २१ ॥

मृगाऽधिपः = सिंहः । किं फलम् = कतमत् प्रयोजनम् । अपेक्ष्य = अकाङ्क्षां कृत्वा । ध्वनतः = गर्जतः । पयोधरान् मेघान् । प्रार्थयते = अभियाति । महीयसः = महत्तरस्य । सा = असौ । प्रकृतिः = स्वभावः खलु । यया = प्रकृत्या । अन्यसमुन्नतिम् = परवृद्धिम् । न सहते = नोपर्षते ॥ २१ ॥

कुरु तन्मतिमेव विक्रमे नृप ! निर्धूयतमःप्रमादजम् । ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २२ ॥

हे नृप ! = भो राजन् ! । तत् = तस्मात् घेतोः । प्रमादजम् = अनवधानतोत्पन्नम् । तमः = मोहम् । निर्धूय = निरस्य। विक्रमे = पौरुषे। एव = हि। मतिम् = बुद्धिम्। कुरु = कुरुष्व। विद्विषाम् = शत्रूणाम् । विपत्तयः = आपदः । तव = भवतः । अनुत्साहेन = अव्यवसायेन । हताः = प्रतिबद्धाः । एतद् = इदम् । ध्रुवम् = निश्चितम् । अवेहि = विद्धि २२

द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः । प्रसहेत रणे तवाऽनुजान् द्विषतां कः शतमन्युतेजसः ॥ २३ ॥

दिग्विभाविताम् = दिक्षुप्रसिद्धान्। आयतः = आगच्छतः चतुरः = चतुःसङ्ख्यकान्। द्विरदान् = दिग्गजानिव। रणे = संग्रामे । आयतः = दीर्घः शतमन्योः = इन्द्रस्य। तेजसः = विक्रमान्। चतुरस्तव = चतुरो भवतो युधिष्ठिरस्य। अनुजान् = भ्रातॄन् । द्विषताम् = अरीणाम् मध्ये । कः = कतमो नरः ॥ प्रसहेत = सोढुं शक्नुयादित्यर्थः ॥ २३ ॥

ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि । विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥ २४ ॥

तव = भवतो युधिष्ठिरस्य । चेतसि = मनसि। सततम् = शाश्वतम् । ज्वलतः = दहतः । वैरिकृतस्य = शत्रुकृतस्य । जातवेदसः = क्रोधाऽग्नेरित्यर्थः । शिवेतरा = अमङ्गला रिपूणाम् = द्विषताम् । नारीणाम् = अबलानाम् । नयनानाम् = नेत्राणाम् । अम्बुनः = जलस्य । सन्ततिः = प्रवाहः। शमम् = शांतिम् । विधातु = करोतु ॥ २४ ॥

इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् । उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २५ ॥

इति = उक्तरीत्या । दर्शितविक्रियम् = प्रकाशितविकारम् । कोपपरीतमानसम् = क्रोधाक्रान्तचित्तम् । मरुतः सुतम् = भीमसेनम् । महीपतिः = नृपो युधिष्ठिरः । दुष्टम् = मदत्तम् । द्विरदमिव = गजमिव । उपसान्त्वयितुम् = अनुनेतुम् । उपचक्रमे = प्रवृत्तोऽभूत् ॥ २५ ॥

अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे । विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥

अपवर्जितविप्लवे = त्यक्तप्रमाणबाधे । शुचौ = सौशब्द्ये । हृदयग्राहिणि = मनोरमे । मङ्गलास्पदे = श्रेयस्करे । तव = भवतो भीमसेनस्य । गिराम् = वाणीनाम् । विस्तरे = वाक्प्रपञ्चे । मतिः = बुद्धिः । आदर्शे = दर्पण इव । विमला = विशदा । अभिदृश्यते = समन्तात् प्रतिभाति ॥ २६ ॥

स्फुटता न पदैरपाकृता न च स्वीकृतमर्थगौरवम् । रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥ २७ ॥

पदैः = सुप्तिङन्तशब्दैः । स्फुटता = विशदार्थता । नाऽ-

---

१—दर्शिता विक्रिया येन—असौ दर्शितविक्रियः—तं दर्शितविक्रियम् ॥

२—कोपेन परीतम्-कोपपरीतम्-कोपपरीतमानसं यस्य-स कोपपरीतमानसः-तं कोपपरीतमानसम् ॥

३ अपवर्जितो विप्लवो यस्य असौ अपवर्जितविप्लवः तास्मिन् अपवर्जितविप्लवे ॥

४ मङ्गलस्यास्पदम् मङ्गलास्पदम् तस्मिन् मङ्गलास्पदे ॥

५—समर्थस्य भावः सामर्थ्यम्—तम् ॥

प्राकृता = नहि त्यक्ता । अर्थगौरवम् = अर्थगुरुत्वम् च नम्भीकृतम् = स्वीकृतमेवेत्यर्थः । गिराम् = पदानाम् अवान्तरवाक्यानांच । पृथगर्थता = भिन्नार्थता । अपुनरुक्तार्थतेति यावत् । रचिता = कृता तथा कचित् = कुत्रापि । सामर्थ्यम् = शक्तिम् । गिरामन्योन्यसाकाङ्क्षत्वम् । नाऽपोहितम् = नहि वर्जितम् ॥ १७ ॥

उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः । इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ॥ २८ ॥

बलात्=बलमाश्रित्य । उपपत्तिः = युक्तिः । उदाहृता = उपन्यस्ता । अनुमानेन = युक्त्या । आगमः = शास्त्रं च । न क्षतः = नहि हतः । ईदृक् = इत्थं क्षात्रयुक्तमिदं वचनम् । अनीदृगाशयः = अविद्यमानेदृगाशय इत्थं क्षात्रयुक्ताभिप्रायायस्यसोऽनीदृगाशयः । कः = कतमो ना । प्रसभम् = हठात् । वक्तुम् = निगदितुम् । उपक्रमेत = प्रारभेत । न कोपीत्यर्थः ॥ २८ ॥

अवितृप्ततया तथापि मे हृदयं निर्णयमेव धावति । अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः ॥ २९ ॥

तथापि = त्वया सम्यङ्निर्णीतेऽपि । मे = मम युधिष्ठिरस्य । हृदयम् = स्वान्तम् । अवितृप्ततया = असन्तुष्टतया । निर्णयमेव = सन्देहमेव । धावति = अनुसरति । अपेक्षत इति यावत् । विधेयेषु = सन्धिविग्रहादिकर्त्तव्यार्थेषु । विशेषसम्पदः = विशिष्टविभवाः । सुखम् = अक्लेशेन । अवसा-

चयितुम् = पुरुषान् मत्वानुकूल्येन स्वस्वरूपं स्वयमेव श्रीं स्वाश्रयितुमित्यर्थः । क्षमाः = शक्ताः । न भवन्ति ॥ २९ ॥

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ ३० ॥

क्रियाम् = कृत्यम् । सहसा = अविचार्य्य । नविदधीत= नोकुर्वीत । कुतः । अविवेकः = अविचार्यकारित्वम् । परम्= अत्यन्तम् । आपदाम् = विपदाम् । पदम् = स्थानम् । ( कारणमित्यर्थः ) गुणलुब्धाः = गुणगृध्नवः । सम्पदः = श्रियः । विमृश्यकारिणम् = विचार्यकर्त्तारं नरम् । स्वयमेव = आत्मनैव । वृणते हि = भजन्ते खलु ॥ ३० ॥

अभिवर्षति योऽनुपालयन् विधिबीजानि विवेकवारिणा । स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥ ३१ ॥

यः = नरः । विधिबीजानि = कृत्यवस्तूनि । विवेकवारिणा = विचारसलिलेन । अनुपालयन् = प्रतीक्षमाणः संरक्षन् । अभिवर्षति = सिञ्चति । सलोकः = असौ पुरुषः । फलशालिनीम् = साधननिष्पादिनीम् । क्रियाम् = कार्यम् । शरदमिव = शरदृतुमिव । सदा = सर्वदा । अधितिष्ठति = क्रियाफलं प्राप्नोत्येव (नकदाचिद् व्यभिचरतीत्यर्थः) ॥ ३१ ॥

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलं-

१—विमृश्यकर्तुं शक्तिः यस्यास्तीति-स विमर्श्यकारी-तं विमृश्यकारिणम् ॥

क्रिया । प्रशमाभरणं पराक्रमः स नयापादित सिद्धिभूषणः ॥ ३२ ॥

श्रुचि = सम्प्रदायशुद्धम् । श्रुतम्=शास्त्रश्रवणम् । वपुः = शरीरम् । भूषयति = अलङ्करोति। तस्य = श्रुतस्य। प्रशमः = क्रोधोपशान्तिः। अलङ्क्रिया = भूषणंभवति । पराक्रमः = शौर्यंच प्रशमस्य = क्रोधोपशान्तेः। आभरणम् = भूषाभवति । सः = असौपराक्रमः । नयापादितसिद्धिभूषणः = नीतिसम्पादितसाधनालङ्कारोभवति ॥ ३२ ॥

मतिभेदतमस्तिरोहितेगहने कृत्यविधौविवेकिनाम् । सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थ दर्शनम् ॥ ३३ ॥

मतिभेदस्य = कार्यविप्रतिपत्तेः । तमसा = अन्धकारेण । तिरोहिते = आच्छन्ने । ( अतएव ) गहने = दुरवगाहे कृत्यविधौ = कार्यानुष्ठाने । विवेकिनाम् = ज्ञानिनाम् । सुकृतः = सदभ्यस्तः । ( अतएव ) परिशुद्धः = निश्चितः । आगमः = शास्त्रम् । दीपइव = प्रकाशसाधनमिव । अर्थदर्शनम् = कार्यज्ञानम् ( वस्तुप्रतिभानम् ) कुरुते = विदधाति॥

स्पृहणीयगुणैर्महात्मभिश्चरितेवर्त्मनियच्छतां मनः । विधिहेतुरहेतुरागसां विनिपातोऽपिसमः समुन्नतेः ॥ ३४ ॥

---

१—नयेनापादिता-नयापादिता-नयापादिताचासौ सिद्धिः-नयापादितसिद्धिः-सैवभूषणं यस्य-सः-नयापादितसिद्धिभूषणः ॥

२—मतेर्भेदः-मतिभेदः—तस्यमतिभेदस्य तमः—ध्वान्तम् तेनतिरोहितम्—तस्मिन् मतिभेदतमस्तिरोहिते ॥

३—स्पृहणीयास्तेगुणाः स्पृहणीयगुणाः—तैः स्पृहणीयगुणैः ॥

स्पृहणीयगुणैः=श्लाघ्यधर्मैः । महात्मभिः=सज्जनैः। चरिते = अनुष्ठिते । वर्त्मनि = आचारे । मनः = स्वान्तम् । यच्छताम् = निदधताम्(सन्मार्गेणव्यवहरतामित्यर्थः विधिहेतुः = दैवनिमित्तकः । आगसाम् = अपराधानाम् । अहेतुः = अकारणम् । विनिपातः = दैविकानर्थोऽपि । समुन्नतेः = अतीववृद्धेः । समः = तुल्यः ॥ ३४ ॥

शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम् । विगणय्य नयन्ति पौरुषं विजितक्रोधरयाजिगीषवः ॥ ३५ ॥

जिगीषवः = विजयेच्छवः नृपाः) विजितक्रोधरयाः = जितकोपवेगाःसन्तः । गरीयसीम् = प्रभूताम् । अदूषितायतीम् = अक्षतोत्तरकालाम् ( स्वान्तामित्यर्थः ) फलनिष्पत्तिम् = फलसिद्धिम् । विगणय्य = विविच्य । पौरुषम् = पुरुषकारम् । शिवम् = अनुकूलम् । औपयिकम् = उपायम्। नयन्ति = प्रापयन्ति ॥ ३५ ॥

अपनेयमुदेतुमिच्छता तिमिरंरोषमयंधियापुरः। अविभिद्य निशाकृतंतमः प्रभयानांशुमताप्युदीयते ॥ ३६ ॥

उदेतुम् = अभ्युदेतुम् । इच्छता = वाञ्छता राज्ञा । पुरः= प्राक् । रोषमयम् = कोपादागतम्।तिमिरम् = अज्ञानम् । धिया = विवेक बुद्ध्याकरणेन । अपनेयम् = अपनोद्यम् = अंशुमताऽपि = सवित्रापि । प्रभया = तेजसा करणेन । निशाकृतम् = रात्र्याश्रितम् । तमः = ध्वान्तम् । अविभिद्य = अभेदंकृत्वा । नोदीयते = अपितुनभिद्येतेत्यर्थः ॥ ३६ ॥

बलवानपिकोपजन्मनस्तमसोनाभिभवंरुणद्धि यः। क्षयपक्षइवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः॥ ३७॥

बलवानपि = बलिष्ठोऽपि। यः = भूपालः। कोपात् = मन्योः। जन्मनः = उत्पत्तेः। तमसः = मोहस्य। अभिभवम् = आक्रान्तिम्। न रुणद्धि = नहिनिवारयति। सः = असौनृपः। क्षयपक्षः = कृष्णपक्षः। ऐन्दवीः = इन्दुसम्बन्धिनीः। कलाइव = अंशाइव। सकलाः = समग्राः। शक्तिसम्पदः = प्रभुमन्त्रोत्साहशक्तीस्तिस्रोऽपि। हन्ति = नाशयति॥ ३७॥

समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम्। अधितिष्ठतिलोकमोजसा स विवस्वानिव मेदिनीपतिः॥ ३८॥

यः = नृपः। समवृत्तिः = तुल्यवर्त्तनःसन्। समये = सत्यवसरे। मार्दवम् = मृदुवृत्तित्वम्। उपैति = प्राप्नोति। तिग्मताम् = तीक्ष्णवृत्तित्वम् च। तनोति = विस्तारयति। सः = असौ। मेदिनीपतिः = भूपालः। विवस्वानिव = सूर्यइव। ओजसा = तेजसा। लोकम् = भुवनम्। अधितिष्ठति = आक्रामति॥ ३८॥

क चिराय परिग्रहः श्रियां क्वचदुष्टेन्द्रियवाजिवश्यता। शरदभ्रचलाश्चलेन्द्रियैरसुरक्षाहिबहुच्छलाः श्रियः॥ ३९॥

---

१—इन्द्रियाणि वाजिनइवेतिसमासः। दुष्टानामिन्द्रियवाजिनांवश्योवशंगतस्तस्य भावस्तत्ता॥ २-चलानीन्द्रियाणि येषां ते चलेन्द्रियाः-तैश्चलेन्द्रियैः॥

श्रियाम् = सम्पदाम् । चिराय = बहुकालम् । परिग्रहः = स्वायत्तीकरणम् । क = कुत्र । दुष्टानाम् = अमार्गगामिनाम् । इन्द्रियवाजिनाम् = चक्षुरादिहयानाम् । वश्यता = वश्यत्वम् । क = कुत्र । नोभयमेकत्रातिष्ठन्तीत्यर्थः । कुतः । हि = यस्मात् । शरदभ्रचलाः = शरदभ्रवच्चञ्चलाः । किंच । बहुच्छलाः = अतुलव्याजाः ( दहुरन्ध्राइतियावत् ) श्रियः = सम्पदः । चलेन्द्रियैः = अजितेन्द्रियैः । असुरक्षाः = रक्षितुमशक्याः । कथंचित् प्राप्ता अपि श्रियोनाविनीतेषु तिष्ठन्तीत्यर्थः ॥

किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः । क्रियते पतिरुच्चकैरपां भवता धीरतयाऽधरीकृतः ॥ ४० ॥

उपात्तरंहसः = प्राप्तवेगस्य । मनसः = स्वान्तस्य । असामयिकम् = अकालीनम् । क्षोभम् = संचलनम् । वितन्वता = विस्तारयता । भवता = त्वयाभीमसेनेन । धीरतया = धैर्यगुणेन । अधरीकृतः = तिरस्कृतः । प्रागितिशेषः अपाम् = जलानाम् । पतिः = स्वामीसमुद्रः । किम् = किमर्थम् । उच्चकैः = आधिकः । क्रियते = नपराजितं पुन रुच्चकैःकुर्यादितिभावः ॥ ४० ॥

श्रुतमप्यधिगम्य येरिपून् विनयन्ते न शरीरजन्मनः । जनयन्त्यचिराय संपदामयशस्ते खलु चापलाश्रयम् ॥ ४१ ॥

ये = मानवाः । श्रुतम् = शास्त्रम् । अधिगम्य = उपलभ्यापि । शरीरजन्मनः[1] = देहप्रभवान् । रिपून् = कामक्रोधादीन् । नविनयन्ते = नोनियच्छन्ति । ते = मर्त्याः । खलु = निश्चयेन । अ-

---

१-शरीरे—देहे जन्मोत्पत्तिर्येषांते शरीरजन्मानः—तान्शरीरजनन्मनः ॥

। चिराय = अल्पकालम् । सम्पदाम् = विभवानाम् । चापलाश्रयम् = अस्थैर्यनिबन्धनम् । अयशः = दुष्कीर्त्तिम् । जनयन्ति = प्राप्नुवन्ति ॥ ४१॥

अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी। जनवन्न भवन्तमक्षमानयसिद्धेरपनेतुमर्हति ॥ ४२ ॥

अतिपातितानि = अतिक्रान्तानि । कालः = समयोऽनुरूपः । साधनानि = सहायादीनियया सातथोक्ता । तापयतीति तापनी । स्वस्य = आत्मनः । यच्छरीरम् = वपुः । इन्द्रियवर्गः = इन्द्रियसमूहश्च । तयोस्तापनी । अक्षमः = अक्रोधः । भवन्तम् = त्वां भीमसेनम् । जनवत् = पृथग्जनमिव । नयसिद्धेः = नयसाध्यफलात् । अपनेतुम् = पृथक् कर्त्तुम् । नार्हति = अममयक्रोधस्याऽऽत्मसंतापातिरिक्तफलंनास्तीत्यर्थः ॥ ४२ ॥

उपकारकमायतेर्भृशंप्रसवः कर्मफलस्य भूरिणः। अनपायिनिबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ४३ ॥

आयतेः = उत्तरकालस्य । भृशम् = अत्यन्तम् । उपकारकम्=स्थिरफलहेतुरित्यर्थः । भूरिणः = प्रभूतस्य । कर्मफलस्य = क्रियाविपाकस्य । प्रसूयतेऽनेनेतिप्रसवः = कारणम् । अनपायि = स्वयमविनश्यदेव । द्विषाम् = अरीणाम् । निबर्हणम् = विनाशकमेवंगुणकम् । साधनम् = उपायः । तितिक्षासमम् = क्षमातुल्यम् । नास्ति ॥ ४३ ॥

प्रणतिप्रवणान् विहाय नः सहजस्नेहनिबद्ध-

चेतसः । प्रणमन्ति सदा सुयोधनं प्रथमे मानभृतां न वृष्णयः ॥ ४४ ॥

सहजस्नेहेन = अकृत्रिमप्रेम्णा । निबद्धचेतसः = अस्मासु गाढं लग्नचित्ताः किंच । मानभृताम् = अहंकारिणाम् । प्रथमे = अग्रेसराः । वृष्णयः = यादवाः । प्रणतिप्रणवान् = प्रणामपरान् । नः = अस्मान् । विहाय = त्यक्त्वा । सुयोधनम् = दुर्योधनम् । सदा = सर्वदा । न प्रणमन्ति = नहि नमन्ति ( नानुसरन्ति ) किन्तु कार्यकाले त्यक्ष्यन्त्येवेत्यर्थः । ४४ ।

सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये । विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये ॥ ४५ ॥

किंच । एषाम् = वृष्णीनाम् । ये सहजाः = सहजाताः । ( मातृपितृपक्षा इत्यर्थः ) सुहृदः = मित्राणि । तथा = तेनैव प्रकारेण । इतरे = कृत्रिमसुहृदश्च । मतम् = अभिमतम् । वृष्णिपक्षं न विलङ्घयन्ति = नातिक्रामन्ति । ते = द्वयेऽपि नृपाः आत्मसिद्धये = स्वजीवनार्थम् । धृतराष्ट्रात्मजम् = दुर्योधनम् = विनयादिव = आनुकूल्यादिव । यापयन्ति = कालं गमयन्ति ॥ ४५ ॥

अभियोग इमान् महीभुजो भवता तस्य कृतः कृतावधेः । प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव ॥ ४६ ॥

कृतावधेः = परिभाषितकालस्य । तस्य = दुर्योधनस्य । भवता = त्वया भीमसेनेन । कृतः = अवधित इति शेषः । अभियोगः = आर्द्राभिभव इति यावत् । इमान् = प्रागुक्तान् ।

महीभुजः = राज्ञः । हरिदश्वः = उष्णरश्मिः । कमलाकरा-निव = सरोजकोषानिव । समुत्पतन् = उद्यन्सन् । प्रविघाट-यिता = भेत्स्यति ॥ ४६ ॥

उपजापसहान् विलङ्घयन् स विधाता नृपतीन् मदोद्धतः। सहते न जनोऽप्यधःक्रियां किमु लोकाधिकधाम राजकम् ॥ ४७ ॥

मदोद्धतः = मत्तः । सः = असौ दुर्योधनः । नृपतीन् = अन्यान् नृपान् । विलङ्घयन् = मदादवमानयन्। उपजापस्य= भेदस्य । सहान् = भेदयोग्यान् । विधाता = विधास्यति । जनः = नरः प्राकृतोऽपि । अधःक्रियाम् = अपमानम् । न सहते = नो मर्षते । लोकाधिकधाम = लोकोत्तरप्रतापम् । राजकम् = राजसमूहः । किमु = किमुत ? । न सहत इति किं वक्तव्यमित्यर्थः ॥ ४७ ॥

असमापितकृत्यसम्पदां हतवेगं विनयेन तावता । प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८ ॥

असमापितकृत्यसम्पदाम् = अकृतकृत्यानाम् । अतोऽभिमानशालिनाम् = अहङ्कारिणाम् । विभूतयः = सम्पद एव । तावता = स्वल्पेन । विनयेन = नम्रतया । कार्यवशादारोपितेनातिशयः । हतवेगम् = प्रतिबद्धवेगम् । नतुस्वरूपतो हतम् । मदम् = अहङ्कारम् । उत्तम्भयितुम् = वर्ध-

---

१—नसमापितम्–असमापितम्—असमापितं कृत्यं यैः तेऽसमापितकृत्याः असमापितकृत्यानां सम्पदः- असमापितकृत्यसम्पदः—तेषामसमापितकृत्यसम्पदाम्.

यितुम् । प्रभवन्ति = सर्वथादुर्जनसम्पदो विकारयन्तीति भावः ॥ ४८ ॥

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेनमूढता। अतिमूढ उदस्यते नयान्नयहीनादपरज्यतेजनः॥४९

मदमानाभ्याम् = दर्पाऽहंकाराभ्याम् । समुद्धतम् = अवनीतम् । नृपम् = महीपालम । मूढता = कार्यापरिज्ञानम् । नियमेन = प्रतिज्ञयाऽवश्यमेव । न वियुङ्क्ते = नहिविमुञ्चति । अतिमूढः = अतीवमूर्खः । नयात् = नीतिमार्गात् । उदस्यते = उत्क्षिप्यते । नयहीनात् = नीतिवियुक्तात् । जनः = मर्त्यः । अपरज्यते = विरक्तो भवति ॥ ४९ ॥

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः । सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥ ५० ॥

अपरागः = अप्रीतिः ( द्वेषइति यावत् ) समीरणः = वायुरिव । तेनेरितः = प्रेरितः । अतएव । क्रमेण = नियमेन । शीर्णा = शीर्णीभूता। आकुला = चलाचा। मूलसन्ततिः = प्रकृत्यादिस्वजनवर्गःशिफासङ्घातश्च यस्य तथोक्तरिपुः = अरिः । महानपि = दीर्घोऽपि । तरुवत् = वृक्षइव । सहिष्णुना क्षमावता । उन्मूलयितुम् = उद्धर्तुम् । सुकरः = सुसाध्यः५०

अणुरप्युपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः । अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः ॥ ५१ ॥

अणुः = अल्पोऽपि । अन्तःप्रकृतिप्रकोपजः = अन्तरङ्गा-

मात्वाद्यवर्गसमुत्थः । विग्रहः = वैरम् । प्रभुम् = स्वामिनम् । उपहंति = नाशयंति । तरुशाखांतानाम् = वृक्षावयवान्तानाम् । निघर्षः = घर्षणम् । तज्जोऽनलः = अग्निः । भूधरम् = गिरिम् । अखिलम् = साकल्येन । निहन्ति हि = सम्यग् दहतीत्यर्थः ॥ ५१ ॥

मतिमान् विनयप्रमाथिनः समुपेक्षेतसमुन्नतिं द्विषः । सजयः खलु तादृगन्तरे विपदन्ता ह्यविनीत सम्पदः ॥ ५२ ॥

मतिमान् = विपश्चित् । विनयप्रमाथिनः = दुर्विनीतस्य । द्विषः = वैरिणः । समुन्नतिम् = वृद्धिम् । समुपेक्षेत = उपेक्षां कुर्यात् । तादृक् = विनीतः । अन्तरे = कचिद् रन्ध्रे । सुजयः = सुखेन जेतुंशक्यः खलु । हि = यस्मात् । अविनीतस्य = अनम्रस्य । सम्पदः = विभूतयः । विपदन्ताः = विपन्मर्यादकाः ( अनर्थका इत्यर्थः ) ॥ ५२ ॥

लघुवृत्तितया भिदां गतं वहिरन्तश्चनृपस्य मण्डलम् । अभिभूय हरत्यनन्तरःशिथिलं कूलमिवापगारयः ॥ ५३ ॥

लघुवृत्तितया = स्वस्यदुर्वृत्तरूपतया । वहिः = मित्रादिजनपदेषु । अन्तः = अमात्यादिषुच । भिदाम् = भेदम् । गतम् = प्राप्तम् । नृपस्य = भूपालस्य । मण्डलम् = राष्ट्रम् अनन्तरः = संनिहितोजिगीषुः । आपगारयः = नदीवेगाः ॥ शिथिलम् = अन्तर्भेदजर्जरम् । कूलमिव = तटमिव । अभिभूय = आक्रम्य । हरति = दूरीकरोति ॥ ५३ ॥

अनुशासतामित्यनाकुलं नयवर्त्माकुलमर्जुना

ग्रजम् । स्वयमर्थइवाभिवाञ्छितस्तमभीयायपराशरात्मजः ॥ ५४ ॥

इति = इत्थम् । आकुलम् = अरिनिकारस्मरणात् क्षुभितम् । अर्जुनाग्रजम् = भीमसेनम् । नयवर्त्म = नीतिमार्गम् । अनाकुलम् = असङ्कीर्णम् । यथातथा । अनुशासतम् = उपदिशन्तम् । तम् = युधिष्ठिरम् । पराशरात्मजः = वेदव्यासः । स्वयम् = आत्मना । अभिवाञ्छितोऽर्थइव = साक्षान्मनोरथइव । अभीयाय = प्राप्तः ॥ ५४ ॥

मधुरैरवशानिलम्भयन्नपि तिर्यञ्चिशमं निरीक्षितैः । परितः पटुविभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ ५५ ॥

मधुरैः = शान्तैः । निरीक्षितैः = अवलोकनैः । अवशानि = प्रातिकूलानि । तिर्यञ्च = मृगपक्ष्यादीनि । शमम् = शान्तिम् । लम्भयन् = प्रापयन् । परितः = समन्तात् । पटु = उज्ज्वलम् । एनसाम् = पापानाम् । दहनम् = ज्वलनम् ( निवर्तकम् ) तथापि । विलोकनक्षमम् = दर्शनीयम् । वह्न्यादिविलक्षणमितिभावः । धाम = तेजः । बिभ्रत् = धारयन् ५५

सहसोपगतः स विस्मयं तपसां सूतिरसूतिरापदाम् । ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसंचयः ॥ ५६ ॥

सहसोपगतः = अकस्मादागतः । तपसाम् = धर्माणाम् । प्रसूतिः = प्रभवः । आपदाम् = विपदाम् । असूतिः = अप्रभवः ( निवर्त्तकइति यावत् ) सः = असौ । मुनिः = व्यासः । वपुष्मान् = देहधारी । पुण्यसञ्चयः = धर्मराशि-

रिव । ( इत्युत्प्रेक्षा ) जगतीभुजा = राज्ञा युधिष्ठिरेण । विस्मयम् = सचकितम् । ददृशे = दृष्टः ॥ ११ ॥

अथोच्चकैरासनतः परार्ध्यादुद्यन्सधूतारुणवल्कलाग्रः । रराजकीर्णाकपिशांशुजालः शृङ्गात् सुमेरोरिव तिग्मरश्मिः ॥ ५७ ॥

अथ = दर्शनानन्तरम् । उच्चकैः = उन्नतात् । परार्ध्यात् = श्रेष्ठात् । आसनतः = सिंहासनात् । उद्यन् = उत्तिष्ठन्सन् । अतएव । धूतानि = कम्पितानि । अरुणानि = रक्तानि । वल्कलाग्राणि = वल्कलाग्रभागाः। यस्यासौतथोक्तः सः = नृपो युधिष्ठिरः । कीर्णम् = विस्तृतम् । आकपिशम् = आश्यावम् । अंशुजालम् = प्रभाजालम् । यस्यासौतथोक्तः। सुमेरोः = हेमाद्रेः । शृङ्गात् = शिखरात् । उद्यन् । तिग्मरश्मिरिव = भानुरिव । रराज = शुशुभे (उपजातिवृत्तम्) ५७।

अवाहितहृदयो विधाय सोऽर्हामृषिवदृषिप्रवरे गुरूपदिष्टाम् । तदनुमतमलञ्चकार पश्चात् प्रशम इवश्रुतमासनं नरेन्द्रः ॥ ५८॥

सः = असौ । नरेन्द्रः = भूपालो युधिष्ठिरः । अवाहितहृदयः = अवप्रमत्तचित्तःसन् । ऋषिप्रवरे = मुनिश्रेष्ठे । ऋषिवत् = ऋष्यर्हाम् । अर्हार्थे वातिप्रत्ययः । गुरूपादिष्टाम् = शास्त्रीयामित्यर्थः । अर्हाम् = पूजाम् ( सत्कारमिति यावत् । विधाय = कृत्वा । पश्चात् = तदनन्तरम् तदनुमतम् = तेनाऽनुज्ञातमासनम् । प्रशमः = शान्तिः । श्रुतम् = शास्त्रश्रवणमिव । अलञ्चकार = अलमकार्षीत् ॥ ५८ ॥

व्यक्तोदितस्मितमयूखविभासितोष्ठस्तिष्ठन् मु-

नेरभिमुखं स विकीर्णधाम्नः। तन्वन्तमिद्धमभितो-
गुरुमंशुजालं लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्त्तेः।

व्यक्तोदितैः = स्फुटोद्गतैः। स्मितमयूखैः = विकसितकिरणैः। विभासितौ = दीप्तौ। ओष्ठौ = अधरौ। यस्यासौ तथोक्तः। विकीर्णधाम्नः = विस्तीर्णतेजसः। मुनेरभिमुखम् = ऋषेः सम्मुखम्। तिष्ठन्। सः = असौ युधिष्ठिरः। इद्धम् = दीप्तम्। अंशुजालम् = किरणजालम्। तन्वन्तम् = विस्तृतम्। गुरुम् = गीष्पतिम्। अभितः = परितः। सकलस्य = निःशेषस्य। शशाङ्कामूर्त्ति र्यस्य तस्य = इन्दोः। लक्ष्मीम् = शोभाम्। उवाह = वहतिस्म। वसन्ततिलका वृत्तम्॥ ५९॥

इति द्वितीयः सर्गः॥

---

# अथ तृतीयः सर्गः॥

ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशु मिवांशुजालैः। बिभ्राणमानीलरुचं पिशङ्गीर्जटा-
स्तडित्वन्तमिवाम्बुवाहम्॥ १॥

ततः=उपवेशानन्तरम्। युधिष्ठिरः। शरच्चन्द्रकराभिरामैः = आह्लादकैरित्यर्थः। उत्सर्पिभिः = ऊर्ध्वं प्रसारिभिः। अंशुजालैः = किरणसमूहैः। प्रांशुम्=उन्नतमिव। स्थितमित्युत्प्रेक्षा। आनीलरुचम् = कृष्णवर्णम्। पिशङ्गीः = पिङ्गलवर्णाः जटाः = सटाः। बिभ्राणम् = धारयन्तम्। अतएव। तडित्वन्तम् = विद्युद्युक्तम्। अम्बुवाहमिव = जलधरमिव। स्थितमित्युत्प्रेक्षा। अस्मिन् सर्गे उपजातिवृत्तम्॥ १॥

प्रसाद लक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन । प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥

समग्राम्=सकलाम् । प्रसादः=सौम्यता तस्य । लक्ष्मीम्=सम्पदम् । दधतम् = धारयंतम् । अतएव । जनातिगेन = लोकातिशायिना । वपुः प्रकर्षेण=आकारसम्पदा । असंस्तुतानाम् = अपरिचितानामपि । ( व्यासोऽयमित्यजानतामपीत्यर्थः ) चेतःसु=चित्तेषु । आर्द्रम् = स्नेहार्द्रम् । भावम् = अभिप्रायम् । प्रसह्य = बलात् । समासजन्तुम् = लगयन्तमिति यावत् ॥ १ ॥

अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम् । माधुर्यविस्रम्भविशेषभाजा कृतोपसम्भाषमिवेक्षितेन ॥ ३ ॥

अनुद्धताकारतया = शान्ताकारत्वेन लिङ्गेन । अन्तःकरणस्य = चित्तस्य । वृत्तिम् = वर्त्तनम् । विविक्ताम् = पूताम् । ( शान्तामिति यावत् ) तन्वन्तम् = प्रकटयन्तम् । माधुर्यम् = निसर्गसौम्यता । विस्रम्भः = विश्वासः । तयोर्विशेषम् = अतिशयम् । भजतीति भाक् तथोक्तेन । ईक्षितेन = दर्शनेनैव । कृतोपसम्भाषा सम्भाषणं येन । तमित्युत्प्रेक्षा ॥ ३ ॥

## युधिष्ठिरोऽब्रवीत् ।

धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनः प्रणुदां श्रुतीनाम् । हेतुं तदभ्यागमने परीप्सुः सुखो-

पविष्टं मुनिमाबभाषे ॥ ४ ॥

धर्म्मात्मजः = युधिष्ठिरः। धर्म्मनिबन्धिनीनाम् = अग्निहोत्रादिधर्मप्रतिपादिकानाम् । एनःप्रणुदाम् = अघच्छिदाम् । श्रुतीनाम् = वेदानाम्। प्रसूतिम् = प्रभवम्। सुखोपविष्टम् = अक्लेशेनास्थितम्। मुनिम् = व्यासम् । तदभ्यागमने = तस्य मुनेरागमने । हेतुम् = कारणम्। परीप्सुः = जिज्ञासुः । आबभाषे = उवाच ॥ ४ ॥

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री। तुल्या भवद्दर्शन सम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥

अनाप्तपुण्योपचयैः = अकृतधर्मसंग्रहैः । दुरापा = दुर्लभा । फलस्य = परिपाकस्य । सवित्री = श्रेयस्करी । निर्धूतरजाः = हतरजोगुणाः । अन्यत्र निर्धूलिः । एषा = इयम्। भवद्दर्शनसम्पद् = त्वदवलोकनसम्पत्तिः (लाभ इति यावत्) वीतबलाहकायाः = गतमेघायाः । दिवः = आकाशस्य सम्बन्धिन्याः । वृष्टेः = वर्षणस्य । तुल्या = समा । इत्युपमालङ्कारः ॥ ५ ॥

अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः । आसंसृतेरस्मि जगत्सु जातस्त्वय्यागते यद्बहुमानपात्रम् ॥ ६ ॥

अद्य = अस्मिन्नहनि । क्रतूनाम् = यज्ञानाम्। क्रियाः = अनुष्ठानानि । कामदुघाः = फलप्रदाः । सम्प्रति = इदानीम् । भूमिदेवाः = विप्राः । सत्याशिषः = तथ्या-

शीर्वादाः यद् = यतःकारणात् । त्वय्यागतेसति = भवदागमनेननिमित्तेनेत्यर्थः । अस्मि = अहमर्थेऽव्ययम् । आसंसृतेः = आसंसारात् (यावत् संसारमित्यर्थः)।जगत्सु = संसारेषु।बहुमानपात्रम् = प्रचुरयोग्यता भाजनम् । जातः = सकलसत्कर्मफलभूतं त्वदागमनं येन मे जगन्मान्यतेतिभावः६

श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्त्तिम् । सन्दर्शनंलोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते ॥ ७ ॥

आत्मयोनेः=ब्रह्मणइव । लोकगुरोः=सर्वशिक्षकस्य । तव= भवतोव्यासस्य । अमोघम् = अविफलम् ( सफलमित्यर्थः ) संदर्शनम् = उपलब्धिः । श्रियम् = शोभाम् । विकर्षति = आकर्षति । अघानि = दुःखानि । अपहरन्ति = दूरीभवन्ति । श्रेयः = पुरुषार्थम् । परिस्नौति = स्रवति । कीर्त्तिम्= यशश्च । तनोति = विस्तारयति । किं बहुना।किं न धत्ते = किं नो करोति । अपितुसर्वं करोतीत्यर्थः ॥ ७ ॥

श्च्योतन् मयूखेऽपि हिमद्युतौमे ननिर्वृतं निर्वृतिमेति चक्षुः । समुज्झितज्ञातिवियोगखेदं त्वत् सन्निधावुच्छ्वसतीव चेतः ॥ ८ ॥

हे भगवन् ! । श्च्योतन्मयूखे = सुधास्राविकरे।हिमद्युतौ= चन्द्रेऽपि विषये । न निर्वृतम् = नो मुक्तम् । मे = मम । चक्षुः = लोचनम् । त्वत्सन्निधौ । भवदभ्याशे । निर्वृतिम् = सुखम् । एति = प्राप्नोति । तथा चेतश्च = चित्तमपि । समुज्झितज्ञातिवियोगखेदम् = त्यक्तबन्धुविरहदुःखम् । उच्छ्वसतीव = अनुपराधेन प्राणितीत्युत्प्रेक्षा ॥ ८ ॥

निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निःस्पृहाणाम् । तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥ ९ ॥

प्रश्नकुतूहलित्वम् = अनुयोगकौतुकत्वम् । निरास्पदम् = अप्रतिष्ठाम् । निःस्पृहाणाम् = युष्मादृशामित्यर्थः।अस्मासु = पाण्डवेषु । अधीनम् = आयत्तम् । किमु = किमुत ( नाकिञ्चिदस्मत्तो लभ्यामित्यर्थः ) तथापिकल्याणकरीम् = अस्मद्धितैकहेतुमित्यर्थः । अतः । ते = तव । गिरम् = वाचम् । श्रोतुमिच्छा = श्रवणेहा । माम् = युधिष्ठिरम् । मुखरीकरोति = व्यवहरयतीत्यर्थः ॥ ९ ॥

इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ । उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥

इति = इत्थम् । उक्तिविशेषरम्यम् = उक्तिवैचित्र्यचारु यथातथा । उक्तवान्=कथितवान् । उदारचेताः = महामनाः। नरेन्द्रः = राजायुधिष्ठिरः । द्वैपायनेन = व्यासेन । द्वीपमयनं स्थानं जन्म भूमिर्यस्यसद्वीपायनः । सएवद्वैपायनस्तेन । प्रज्ञादिभ्यश्च, इतिस्वार्थेऽण्प्रत्ययः । जयोपपत्तौ = विजयसिद्धौ । मनः = स्वान्तम् । समाधाय = जयसिद्धिमपेक्ष्येत्यर्थः । इति = वक्ष्यमाणप्रकाराम् । उदाराम् = अर्थवतीम् । गिरम् = वाणीम् । अभिदधे = उक्तः ॥ १० ॥

व्यासोऽगादीत् ।

चिचीषतां जन्मवतामलघ्वीं यशोवतंसामु-

भयत्रभूतिम् । अभ्यर्हिताबन्धुषुतुल्यरूपावृत्तिर्वि-
शेषेण तपाधनानाम् ॥ ११ ॥

अलघ्वीम् = गुर्वीम् । यशोवतंसाम् = कीर्तिभूषणम् । उभयत्र = इहचाऽमुत्रच । भूतिम् = श्रेयः । चिचीषताम् = चेतुंसंग्रहीतुमिच्छताम् । जन्मवताम् = शरीरिणाम् । बन्धुषु = भ्रातृषुविषये । तुल्यरूपा = एकविधा । वृत्तिः = व्यवहारः अभ्यर्हिता = उचिता । तपोधनानाम् = तापसानाम् । विशेषेण = नियमेन । अभ्यर्हिता ॥ ११ ॥

तथापि निघ्नं नृप ! तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः । वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषुहि पक्षपाताः ॥ १२ ॥

तथापि = तुल्यवृत्तौ चित्तेऽपि । हेनृप ! = भो राजन् ! । तावकीनैः = त्वदीयैः । गुणौघैः = धर्मसमूहैः । प्रह्वीकृतम् = आवर्जितम् । मे = ममव्यासस्य । हृदयम् = स्वान्तम् । निघ्नम् = त्वदायत्तम् । वीतस्पृहाणाम् = विरक्तानाम् । मुक्तिभाजाम् = मुमुक्षूणामपीत्यर्थः । भव्येषु = साधुषु । पक्षपाताः = स्नेहाभवन्ति ॥ १२ ॥

सुतान यूयं किमु तस्य राज्ञःसुयोधनं वा न गुणैरतीताः । यस्त्यक्तवान् वः स वृथा बलाद्वा मोहं विधत्ते विषयाभिलाषः ॥ १३ ॥

यूयम् = पाण्डवाः । तस्य = अमुष्य । राज्ञः = धृतराष्ट्रस्य । सुताः = पुत्राः । नकिमु = अपितु सुता एवेत्यर्थः । गुणैः = शान्तिदानदाक्षिण्यादिभिः । सुयोधनम् = धृतराष्ट्रतनयम् ।

नातीता वा = नातिक्रान्ता वा ( अतीतापवेत्यर्थः ) यः = धृतराष्ट्रः । वः = युष्मान् । वृथा = निष्कारणमेव । त्यक्तवान् = हातवान् । सः = असौ धृतराष्ट्रः । विषयाभिलाषः = भोगतृष्णा । बलाद् वा = बलादिव । मोहम् = आविवेकम् । विधत्ते = विदधाति ॥ १३ ॥

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः । असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ १४ ॥

एनम् = धृतराष्ट्रम् । अर्थसिद्धिः = अर्थसाधनम् । कथम् = केन प्रकारेण । न जहातु = अपितु जहात्वेवेत्यर्थः । यः = धृतराष्ट्रः । संशय्य = सन्दिह्य । कर्णादिषुतिष्ठते = कर्णादीनदुर्मन्त्रिणः सन्दिग्धार्थे निर्णेतृत्वेनावलम्बतइत्यर्थः । असाधुयोगाः = दुर्जनसंसर्गाः । जयान्तरायाः = विजयघातकाः । प्रमाथिनीनाम् = उन्मूलनशीलानाम् । विपदाम् = आपदाम् । पदानि = स्थानानि भवन्ति ॥ १४ ॥

पथश्च्युतायां समितौ रिपूणां धर्म्यांदधानेन धुरंचिराय । त्वयाविपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेमपरंगुणेषु ॥ १५ ॥

रिपूणाम् = अरीणाम् । समितौ = परिषदि । पथश्च्युतायाम् = मार्गाद्भ्रष्टायाम् । चिराय = अनल्पकालम् । धर्म्याम् = धर्मादनपेताम् । धुरम् = भारम् । दधानेन = धारयता । त्वया = युधिष्ठिरेण । विपत्स्वपि = आपत्स्वपि । अविपत्ति = अविनाश्यत एव । रम्यम् = सुन्दरम् । गुणेषु = शान्त्यादिषुविषये । परम् = उत्कृष्टम् । प्रेमाविष्कृतम् = स्ने-

इमकटीकृतम्। दुःसहमपि सोढवता। त्वया साधु कृतमिति भावः॥

विधायविध्वंसमनात्मनीनं शमैकवृत्तेर्भवत-
श्छलेन। प्रकाशितत्वन्मतिशीलसाराः कृतोप-
कारा इव विद्विषस्ते॥ १६॥

शमैकवृत्तेः = शान्त्येकवर्त्तनस्य। भवतः = तवयुधिष्ठि-
रस्य। छलेन = कपटेन। अनात्मनीनम् = स्वस्यैवानर्थहेतु-
मित्यर्थः। विध्वंसम् = अपकारम्। विधाय = कृत्वा। प्रका-
शितः = प्रख्यापितः। तव = भवतो युधिष्ठिरस्य। मति-
शीलयोः = प्रज्ञासद्वृत्तयोः। सारः = प्रकर्षः। यैस्तेतथो-
क्ताः। ते = तव। विद्विषः = वैरिणः। कृतोपकारा इव =
उपकृतवन्तइव॥ १६॥

लभ्याधरित्री तव विक्रमेण ज्यायांश्च वीर्या-
स्त्रबलैर्विपक्षः। अतः प्रकर्षाय विधिर्विधेयः प्रकर्ष-
तन्त्रा हि रणे जयश्रीः॥ १७॥

तव = त्वयायुधिष्ठिरस्य। धरित्री = पृथ्वी। विक्रमेण =
शौर्यातिशयेन। लभ्या = प्राप्तव्या। नच सुलभेत्यर्थः।
विपक्षश्च = शत्रुरपि वीर्यम् = शौर्यम्। अस्त्राणि = आग्नेया-
दीनि। बलानि = सैन्यानि। तैः। ज्यायान् = प्रशस्यतरः
आधिकतर इतियावत्। अतः = एतदर्थाम्। प्रकर्षाय = आ-
धिक्याय। विधिः = उपायः। विधेयः = कर्त्तव्यः। कुतः।
हि = यस्मात्। रणे = संग्रामे। जयश्रीः = विजयश्रीः प्राप्तिः।
प्रकर्षतन्त्रा = अतीव प्रधाना। प्रकर्षायत्तेत्यर्थः॥ १७॥

त्रिःसप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य

स जामदग्न्यः। वीर्यावधूतःस्म तदाविवेद प्रकर्ष-
माधारवशं गुणानाम् ॥ १८ ॥

त्रिःसप्तकृत्वः = त्रिरावृत्तान् सप्तवारान् ( एकविंशतिकृत्व इत्यर्थः ) जगतीपतीनाम् = महीपालानाम् । हन्ता = नाशकः । गुरुः = अस्त्रवेदोपदेष्टा । सः = असौ प्रसिद्धः । जामदग्न्यः = जमदग्निसूनुः ( परशुराम इत्यर्थः ) यस्य = भीष्मस्य । वीर्यावधूतः = विक्रमाभिभूतः ।( अम्बिकास्वयंवर इत्यर्थः ) तदा = भङ्गप्राप्तिसमये । गुणानाम् = शौर्यादीनाम् । प्रकर्षम् = अतिशयम् । आधारवशम् = आश्रयाधीनम् । विवेदस्म = जज्ञे । स्म पादपूर्णेभूतेऽर्थे च ॥ १८ ॥

यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्तइवा-
न्तकोऽपि । धुन्वन् धनुःकस्य रणेन कुर्यान्मनो-
भयैकप्रवणं सभीष्मः ॥ १९ ॥

यस्मिन् = भीष्मविषये । अनैश्वर्येण = असमर्थेन । कृतव्यलीकः = जनितवैलक्ष्यः(जातलज्जइत्यर्थः) अन्तकोऽपि= यमोऽपि। पराभवम् = तिरस्कारम्।प्राप्त इव = लब्धइव। सः= असौ । भीष्मः = गाङ्गेयः । रणे = युद्धे । धनुः = कोदण्डम्। धुन्वन् = कम्पयन्। कस्य = जन्तोः । मनः = स्वान्तम् । भयैकप्रवणम् = भयएवप्रवणमेकोन्मुखम् । न कुर्यात् = नोकरोतु। अपितु सर्वस्यापि मनसि भयंकुर्यादेवेत्यर्थः ॥१९॥

सृजन्तमाजाविषु संहतीर्वः सहेत कोप-
ज्वलितं गुरुं कः । परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २१ ॥

आजौ = सङ्ग्रामे । इषुसंहतीः = बाणसङ्घान् । सृज-

न्तम् = वर्षन्तम् । कोपज्वलितम् = क्रोधदग्धम् । अतएव । परिस्फुरन्त्यः = स्पन्दमानाः । लोलाः = चञ्चलाः । शिखाग्राण्येव = कोणा एव । जिह्वा = रसना । यस्य तं तथोक्तम् । जगत् = लोकम् । जिघत्सन्तम् = अत्तुमिच्छन्तम् । अन्तवह्निम् = कालाग्निमिव स्थितम् । गुरुम् = द्रोणम् । वः = युष्माकं मध्ये । कःसहेत = को नासोढुं शक्नुयात् । नकोपीत्यर्थः ॥ २० ॥

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् । असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥ २१ ॥

संरम्भेण = कोपेन । निरस्तम् = दूरीकृतम् । धैर्यम् = निर्विकारचित्तत्वम् । येन तं तथोक्तम् । आराधितजामदग्न्यम् = शुश्रूषितभार्गवम् । जामदग्न्यादधिगतास्त्ररहस्यमित्यर्थः । राधेयम् = राधातनयंकर्णाम् । निरीक्ष्य = आलोक्य । मृत्योरपि = मरणस्यापि । असंस्तुतेषु = अपरिचितेषु । भयेषु = भीतिषु । प्रसभम् = बलात्कारेण । पक्षपातः = परिचयः । जायेत = जायताम् । मृत्युरप्यस्माद् बिभीयात् किमुतान्य इति ॥ २१ ॥

यथासमासादितसाधनेन सुदुश्चरामाचरता तपस्याम् । एतेदुरापं समवाप्य वीर्यमुन्मूलितारः कपिकेतनेन ॥ २२ ॥

यथा = विधया करणेन । सुदुश्चराम् = अतिदुष्कराम् । तपस्याम् = तपश्चर्य्याम् । आचरता = शिवंप्रतितपः कुर्वतेत्यर्थः । अतएव । समासादितम् = प्राप्तम् । साधनम् =

रसिद्धिः । पाशुपतास्त्ररूपंयेन तेन । कपिः = हनुमान् । केत-
नम् = चिह्नम् । यस्यतेन । अर्जुनेनेत्यर्थः । दुरापम् = अ-
न्यस्यदुर्लभम् । वीर्यम् = तेजः । समवाप्य = उपलभ्य ।
एते = पूर्वोक्ताभीष्मादयः । उन्मूलितारः = उन्मूलयिष्यन्ते

महत्त्वयोगाय महामहिम्नामाराधनींतांनृप! देवतानाम् । दातुं प्रदानोचित ! भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम् ॥ २३ ॥

हेनृप ! = भोराजन् ! युधिष्ठिर ! । महत्त्वयोगाय = प्रकर्षलाभाय । महामहिम्नाम् = महानुभावानाम् । देवतानाम् = इन्द्रादीनाम् । आराधनीम् = प्रसादयित्रीमित्यर्थः । आराध्यतेऽनयेत्याराधनी ताम् । भूरिधाम्नीम् = महाप्रभावाम् । विद्याम् = इन्द्रमन्त्ररूपाम् । सिद्धिम् = साधनामिव । हेप्रदानोचित ! = हेदानपात्रभूत । दातुम् = दानाय । उपागतोऽस्मि = सम्प्राप्तोऽस्मि ॥ २३ ॥

इत्युक्तवन्तं व्रज साधयेति प्रमाणयन् वाक्यमजातशत्रोः । प्रसेदिवांसंतमुपाससाद वसन्निवान्ते विनयेन जिष्णुः ॥ २४ ॥

इति = इत्थम् । उक्तवन्तम् = वदन्तम् । प्रसेदिवांसम् = प्रसन्नम् । तम् = मुनिम् । जिष्णुः = जयनशीलोऽर्जुनः । व्रज = गच्छ । साधय = अनुतिष्ठ । इति = एवंरूपम् । अजातशत्रोः = धर्मराजस्य । वाक्यम् = वचनम् । प्रमाणयन् = तदादिष्टःसन् । अन्तेवसन् = निवासं कुर्वन् । छात्रइव = विद्यार्थीव । विनयेन = अनौद्धत्येन । उपससाद = समीपंप्राप २४

निर्याय विद्याथ दिनादिरम्याद् विम्बादिवा-

र्कस्य मुखान्महर्षेः । पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत् पद्ममिवाभिपेदे ॥ २५ ॥

अथ = अनन्तरम् । वह्निकणावदाता = स्फुलिङ्गवदुज्ज्वला । विद्या = इन्द्रमन्त्ररूपा । दिनादिरम्यादर्कस्य = प्रभातभास्करस्य । विम्बादिव = प्रतिविम्बामिव । महर्षेः = व्यासस्य । मुखात् = आननात् । निर्याय = निर्गत्य । दीप्तिः = अरुदोभ्रतिः । स्फुरत् = विकसत् । पद्ममिव = कमलमिव । पार्थाननम् = अर्जुनस्य मुखम् । अभिपेदे = प्रविष्टा ॥ २५

योगं च तं योग्यतमाय तस्मै तपः प्रभावाद्विततार सद्यः । येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः ॥ २६ ॥

योग्यतमाय = अर्हतमाय । तस्मै = अर्जुनाय । तम् = वक्ष्यमाणमाहिमानम् । योगम् = ध्यानविधिं च । तपःप्रभावात् = तपस्यासामर्थ्यात् । सद्यः = झटिति । वितताार = सन्ददौ । येन = योगेन । तत्त्वेषु = प्रकृतिमहदादिषु (मूलप्रकृतिर्महानहंकारो मनश्चपञ्चतन्मात्राणि पञ्चज्ञानेन्द्रियाणि कर्मेन्द्रियाणि पञ्च पञ्च महाभूतानीति चतुर्विंशति तत्त्वानि ) तत्रावभासे = साक्षात्कारे कृतेसति । अस्य = अर्जुनस्य । चक्षुरिव = लोचनमिव । चिराय = अनल्पकालम् । समुन्मिमीलेव = उन्मिषितमिव ॥ २६ ॥

आकारमाशंसित भूरिलाभं दधानमन्तःकरणानुरूपम् । नियोजयिष्यन् विजयोदये तं तपः समाधौ मुनिरित्युवाच ॥ २७ ॥

आशंसितः = आख्यातः । भूरिलाभः = अनेकश्रेयः ।

प्राप्तिर्येन तं तथोक्तम् । अन्तःकरणानुरूपम् = मनोऽनुकूलम् । आकारम् = मूर्त्तिम् । दधानम् = धारयन्तम् । तम् = अर्जुनम् । मुनिः = व्यासः । विजयोदयं = विजयफलके । तपःसमाधौ = तपोनियमे । नियोजयिष्यन् = नियोजयितुमिच्छन्नित्यर्थः । इति = वक्ष्यमाणम् । उवाच = अवोचत् २७

अनेन योगेन विवृद्धतेजा निजां परस्मै पदवीमयच्छन् । समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥

अनेन = स्वोपदिष्टेन । योगेन = चित्तवृत्तिनिरोधेन । विवृद्धतेजाः = समृद्धकान्तिः । निजाम् = आत्मनीनाम् । पदवीम् = आस्पदम् । परस्मै अयच्छन् = परस्यप्रवेशमयच्छन्नित्यर्थः । उपात्तशस्त्रः = निगृहीतायुधः सन् । जपोपवासाभिषवैः = स्वाध्यायानशनस्नानैः । मुनीनाम् = ऋषीणाम् । आचारम् = सच्चरित्रम् । समाचर = अनुतिष्ठ ॥ २८

करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि । शिलोच्चयं चारुशिलोच्चयं तमेषक्षणान्नेष्यति गुह्यकस्त्वाम् ॥ २९ ॥

यत्र = शिलोच्चये । गोत्रभिदः = इन्द्रस्य । प्रसत्तये = प्रसादाय । सुदुश्चराणि = सुदुष्कराणि । तपांसि = तपस्याः । करिष्यसे = विधास्यसे । चारुशिलोच्चयम् = रम्यशिखरम् । तम् = अमुम् । शिलोच्चयम् = गिरिमिन्द्रकीलरूपम् । त्वाम् = भवन्तम् । एषः = अयम् । गुह्यकः = यक्षः । क्षणान्नेष्यति = प्रापयिष्यति ॥ २९ ॥

इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेनतिरो-

बभूवे। तं राजराजानुचरोऽस्य साक्षात् प्रदेशमादेशमिवाधितष्ठौ ॥ ३० ॥

इति = इत्थम्। तम् = अमुम्। महेन्द्रसूनुम् = अर्जुनम्। ब्रुवाणेन = उक्तवता। तेन = महर्षिणाव्यासेन। तिरोबभूवे= अन्तर्दधे। राजराजस्य = यक्षराजस्य। अनुचरः = पूर्वोक्तयक्षः। अस्य = मुनेः। आदेशम् = आज्ञाम्। साक्षादिव= अपरोक्षादिव। प्रदेशम् = अर्जुनाधिष्ठितस्थानम्। अधितष्ठौ = प्राप्तवानित्यर्थः ॥ ३० ॥

कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनःस जिष्णौ। इयाय सख्याविव संप्रसादं विश्वासयत्याशु सतां हि योगः ॥ ३१ ॥

सः = असौ। पुण्यजनः = यक्षः। कृतानतिः = कृतप्रणामःसन्। व्याहृतसान्त्ववादे = उक्तप्रियवचने। जिष्णौ= अर्जुने। जातस्पृहः = जातानुरागः सन्। सख्यौ = सुहृदीव। सम्प्रसादम् = विश्वासम्। इयाय = प्राप। हि = यतः। सताम्=सज्जनानाम्। योगः = सङ्गतिः। आशु = शीघ्रम्। विश्वासयति = प्रीतिंजनयाति ॥ ३१ ॥

अथोष्णभासेव सुमेरुकुञ्जान्विहीयमानानुदयाय तेन। बृहद्द्युतीन्दुःखकृतात्मलाभं तमः शनैः पाण्डुसुतान् प्रपेदे ॥ ३२ ॥

अथ = अनन्तरम्। उष्णभासा = सूर्येण। उदयाय = पुनरुद्गमनाय। विहीयमानान् = त्यज्यमानान्। बृहद्द्युतीन् = सौवर्णत्वाद्दीप्यमानानित्यर्थः। सुमेरुकुञ्जानिव = हेमाद्रिकुञ्जानिव। तेन=अर्जुनेन। पाण्डुसुतान् = चतुरइति।

दुःखेन = कृच्छ्रेण । कृतः = उपपादितः । आत्मकामः = उत्पत्तिः । यस्य तन्तथोक्तम् । तमः = शोकोऽन्धकारश्च. शनैः = मन्दम् । प्रपेदे = प्राप ॥ १२ ॥

असंशयालोचितकार्यनुन्नःप्रेम्णा समानीय विभज्यमानः । तुल्याद्विभागादिवतन्मनोभिर्दुःखातिभारोऽपि लघुः समेने ॥ ३३ ॥

असंशयम् = असन्दिग्धम् । यथातथा । आलोचितम् = विवेचितम् । यत्कार्यम् = यत्कर्म । तेन । नुन्नः = निरस्तः । तथापि । प्रेम्णा = भ्रातृवात्सल्येनकर्त्रा । समानीय = पुनराकृष्य । विभज्यमानः = समशो भागी क्रियमाणः । सः = असौ पूर्वोक्तः । दुःखातिभारोऽपि = क्लेशमेवातिभारभूतमपि । तन्मनोभिः = तेषां चतुर्णां पार्थानां स्वान्तैः । तुल्याद्विभागादिव = प्रागुक्तप्रेमकृतात् समविभागादिवेत्यर्थः । लघुः = सूक्ष्मः । मेने = मतः ॥ ३३ ॥

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः । वीर्यंच विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥ ३४ ॥

धैर्येण = निसर्गतोनिर्विकाराचित्तत्वेन । तथा । महर्षेः = व्यासस्य । प्रवर्त्तकस्येति शेषः । विश्वास्यतया = श्रद्धेयवचनत्वेनेत्यर्थः । अरातिप्रभवात् = शत्रुहेतुकात् । तीव्रात् = महद्दुःखात् । मन्योः = क्रोधाद्धेतोः । मघोनः सुते = अर्जुने । वीर्यंच = पराक्रमं च । विद्वत्सु = ज्ञातवत्सु । इतियावत् । तेषु = पार्थेषु । सः = असौ । शोकः = मन्युः । स्थानम् = स्थितिम् । नावाप = न प्राप ॥ ३४ ॥

तान्भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य । एकौघभूतं तदशर्मकृष्णां विभावरीं ध्वान्तमिव प्रपदे ॥ ३५ ॥

तत् = पार्थैस्त्यक्तवत् । अशर्म = दुःखम् । भूरिधाम्नः = अतितेजस्विनः । चतुरः = चतुःसङ्ख्याकान् पार्थानपि । वासरस्य = दिनस्य । भूरिधाम्नश्चतुरः । यामान् = प्रहरानिव । दूरम् = विप्रकृष्टम् । विहाय = त्यक्त्वा । एकौघभूतम् = एकराशिभूतंमत् । कृष्णांविभावरीम् = कृष्णपक्षरात्रिम् । ध्वान्तमिव = अन्धकारमिव । कृष्णाम् = द्रौपदीम् । प्रपेदे = प्राप ॥ ३५ ॥

तुषारलेखाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः । अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे ॥ ३६ ॥

स = असौद्रौपदी । विलोकने = अर्जुनवीक्षणे । अगूढभावा — अगुप्ताभिप्रायापि । स्फुटाभिलाषिणीति यावत् । मङ्गलभङ्गभीरुः = कल्याणहानेर्भीतासती । पर्यश्रुणी = परिगताश्रुके ( बाष्पावृत्तेइत्यर्थः ) तुषारलेखाकुलितोत्पलाभे = हिमबिन्दुमाहितेन्दीवरसन्निभे । लोचने = नेत्रे । मीलयितुम् = बन्दीकर्तुम् । न विषेहे = नो शशाक ॥ ३६ ॥

अकृत्रिमप्रेमरसाभिरामं रामार्पितंदृष्टिविलोभिदृष्टम् । मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥

इन्द्रसूनुः = अर्जुनः । अकृत्रिमेण = कृत्रिमवर्जितेन । प्रेमरसेन = प्रियभावेन । अभिरामम् = मनोहरम् । रामया =

रमण्या । अर्पितम् = दत्तम् । दृष्टिविलोभि = अवलोकनप्रियम् । इष्टम् = दर्शनम् । मनःप्रसादाञ्जलिना = स्वान्तप्रसन्नताञ्जलिना । पाथेयम् = शम्बलमिव । निकामम् = अतिशयेन । जग्राह = गृहीतवान् ॥ ३७ ॥

धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः । निरुद्धवाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥

वन्यद्विपेन = विपिनहस्तिना । निदाघसिन्धुः = ग्रीष्मनदीव । धैर्यावसादेन = धैर्यभ्रंशनकर्त्रा । हृतप्रसादा = हृतनैर्मल्या । क्षोभं गमितेत्यर्थः । राजपुत्री=क्षत्रियतनयाद्रौपदी । निरुद्धवाष्पोदयम् = संरुद्धरोदनम् । सन्नकण्ठम् = हीनस्वरम् । कृच्छ्राद् = कथंचित् । इति = वक्ष्यमाणम् । उवाच = बभाषे ॥ ३८ ॥

## द्रौपद्याचष्टे।

मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यन् । आधिद्विषामा तपसां प्रसिद्धेरस्मद् विना मा भृश मुन्मनीभूः ॥ ३९ ॥

पङ्कभूते = कर्दमोपमिते । द्विषच्छद्मनि = शत्रुकपटे । मग्नाम् = दुरुद्धराम् । सम्भावनाम् = योग्यताम् । ( गौरवमिति यावत् ) भूतिम् = सम्पदमिव । उद्धरिष्यन् = उन्नेष्यन् । उद्धारकस्त्वमिति शेषः । आधिद्विषाम् = दुःखच्छिदाम् । तपसाम् = धर्माणाम् । प्रसिद्धेः = सम्यक्सिद्धिपर्यन्तम् । अस्मद्विना = अस्माभिर्विनेत्यर्थः । भृशम् = अतिशयम् । मोन्मनीभूः = अस्मद्विरहाद् दुर्मना मा भूरित्यर्थः ॥ ३९ ॥

यशोऽधिगन्तुंसुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥

यशोऽधिगन्तुम् = कीर्त्तिं लब्धुम् । सुखस्य = आनन्दस्य। लिप्सया = लब्धुमिच्छया । मनुष्यसङ्ख्याम् = नरगणनाम् । अतिवर्त्तितुम् = अतिक्रमितुं वा । अमानुषं कर्म कर्त्तुमित्यर्थः । अभियोगभाजाम् = अभिनिवेशवताम् । निरुत्सुकानाम् = अनुत्सुकानाम् (अदुर्मनानामित्यर्थः) सिद्धिः= पूर्वोक्तं यशः सुखाद्यर्थासिद्धिश्च । समुत्सुकेव = अनुरक्तकान्तेव । अङ्कम् = उत्सङ्गमन्तिकम् । उपैति = प्राप्नोति ४०

लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णान् वसु जैत्रमोजः। तेजस्विताया विजयैकवृत्तेर्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥ ४१ ॥

विधात्रा = ब्रह्मणा । लोकम् = संसारम् । गोप्तुम् = रक्षितुम् । विहितस्य = सृष्टस्य । क्षत्रस्य = क्षत्रियजातेः । जैत्रम् = जयनशीलम् । ओजः = बलं दीप्तिर्वा । तदेव वसु = धनम् । मुष्णन् = अपहरन् । विजयैकवृत्तेः = विजयैकजीविकायाः । तेजस्वितायाः = तेजस्विनामित्यर्थः । प्रियम् = प्रेष्ठम्। प्राणमिव = प्राणसममित्यर्थः । अभिमानम् = अहङ्कारम् । निघ्नन् = खण्डयन् । तेजस्विनां प्राणहानिमायो मानहानिरिति भावः ॥ ४१ ॥

व्रीडानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रपन्नः । वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् ॥ ४२ ॥

आत्मजनोऽग्नीः = यथार्थवक्त्राऽसाधितः।प्रापितइत्यर्थः। तथापि। संशय्य = सन्दिह्य ( असम्भावितबुद्ध्येति भावः) व्रीडानतैः = जुगुप्सितवृत्तान्तश्रवणादिति भावः । नृपैः = देशान्तरस्थैर्भूपालैः। कृच्छ्रेण = दुःखेन। प्रपन्नः = आप्तोक्तत्वात्कथंचिद्विश्वस्त इत्यर्थः। पृथिव्याम् = भूमौ। वितानभूतम् = उल्लोचोपमितम्। यद्वा वितानभूतं वितानसमम् = उल्लोचतुल्यमिति यावत्। दिग्विकीर्णम् = दिगन्तलग्नम्। वितानमपि दिगन्तलग्नमितिभावः। विततम् = प्रथितम्। यशः = कीर्त्तिम्। समूहन्निव = सङ्कोचयन्निव। अरातिपरिभूतस्य कुतः कीर्त्तिरिति भावः॥ ४२॥

वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव संप्रतीतिम्। कुर्वन्प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः॥ ४३॥

वीर्याण्येव = बलान्येव। अवदानानि = प्रशस्तकर्माणि। तेषु। कृतावमर्षः = कृतास्कन्दनः। पुराकृतपराक्रमजातान्यपिप्रमृजन्नित्यर्थः। सम्प्रतीतिम् = ख्यातिम्। अभूताम् = अविद्यमानामिव। तन्वन् = कुर्वन्। अह्नोऽवशेषः = दिनान्तः। अर्कत्विषामिव = सूर्यदीप्तिमिव। आयतीनाम् = उत्तरकालानाम्। प्रयामक्षयम् = दैर्घ्यनाशम्। कुर्वन् = विदधन्निति॥ ४३॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्त्तुं न शक्यः किमुताधिकर्त्तुम्। नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद् विना मे हृदयं निकारः॥ ४४॥

परैः = अरिभिः। अस्मासु = पाण्डवेषु। प्रसह्य = बलात्।

प्रयुक्तः = आचरितः। यो निकारः = पारिभवः । क्लेशाकर्षण-रूपास्तिरस्कार इतियावत् । स्मर्तुम् = स्मरणाय। नशक्यः = नो सोढुमर्हः । अधिकर्तुम = अनुभावितुम। किमुत = अतीव। सः असौ निकारः । त्वद्विना=त्वयाविना । आर्द्रः सन् = क्लिन्नःसन् । नवीकरिष्यति = नूतनी भविष्यतीत्यर्थः । उपशुष्यत् = त्वयाविना शुष्कमिति भावः । मन्मथमर्द्दाणयाः । हृदयम् = स्वान्तम् ; नवीकरिष्यति = आर्द्रीकरिष्यति ४४

प्राप्तोऽभिमामव्यसनादमह्य दन्तीवदन्तव्यसनाद्विकारम् । द्विषद्प्रतापान्तरितोरुतेजाःशरद्घनाकीर्णइवादिरह्नः ॥ ४५ ॥

अभिमानस्य = दर्पस्य । व्यसनात् = भ्रंशात् । दन्तव्यसनात् = रदभङ्गात् । दन्तीव = करीव । असह्यम् = अतीव । विकारम् = वैरूप्यंप्राप्तः । द्विषत्प्रतापेन = शत्रूणां तेजसा । अन्तरितम् = तिरस्कृतम् । उरुतेजः = प्रतापो यस्यसतथाक्त-अतएव । शरद्घनाकीर्णः = शरदृतुमेघच्छन्नः । अह्नः = दिवसस्य । आदिः = प्रत्यूषइव स्थितः । तद्वदेवाप्रत्याभिज्ञायमानइत्यर्थः ॥ ४५ ॥

सव्रीडमन्दैरिवनिष्क्रियत्वान्नात्यर्थमस्त्रैरवभासमानः । यशःक्षयक्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥

निष्क्रियत्वाद् = अर्थक्रियाशून्यत्वाद् । सव्रीडमन्दैरिव = सव्रीडैरतएवमन्दैरपटुभिरेवास्थितैरित्युत्प्रेक्षा । अस्त्रैः = प्रहरणैः । अत्यर्थम् = अतिशयम् । नाऽवभासमानः = न प्रकाशमानः ( पूर्वंतुनैवमिति भावः ) किन्तु । यशःक्षयाद् =

कीर्तिनाशहेतोः । क्षीणजलः = नष्टतोयः । योऽर्णवपल्वलाभः = तत्सदृशः । त्वम् = भवानर्जुनः । अन्यम् = इतरम् । आकारम् = स्वरूपम् । अभिपन्नः = प्राप्तइव । स्थितः ॥ ४६ ॥

दुःशासनामर्षरजो विकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः । केशैः कदर्थीकृतवीर्यसारः कच्चित् स एवासि धनञ्जयस्त्वम् ॥ ४७ ॥

दुःशासनस्य = दुर्योधनकनीयसो भ्रातुः । आमर्षः = आमर्षणमाकर्षणं स एव । रजः = धूलिः (मालिन्यहेतुत्वादिति भावः) तेन । विकीर्णैः = विक्षिप्तैः । अतएव । विनाथैरिव = स्थितवतां युष्माकममत्त्वपायत्वादनाथैरिव स्थितैः । भाग्यनाथैः = दैवमात्रशरणैः । एभिः = परिदृश्यमानैः । केशैः = कचैः । कदर्थीकृतौ = गर्हार्थीकृतौ । वीर्यसारौ = शौर्यबले । यस्य स तथोक्तः । त्वम् = भवान्पार्थः । सः = असावेव । धनञ्जयोऽसि = अर्जुनोऽसि कच्चित् ॥ ४७ ॥

स क्षत्रियस्त्राणसहः सतां यस्तत् कार्मुकं कर्मसु यस्य शक्तिः । वहन् द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८ ॥

स क्षत्रियः = असौ राजन्यः । यः सताम् = सज्जनानाम् । त्राणसहः = रक्षणक्षमः । तत् = अदः । कार्मुकम् = धनुः । यस्य = कार्मुकस्य । कर्मसु = रक्षणक्रियासु । शक्तिः = सामर्थ्यमस्ति । एवं स्थिते । यदि = चेत् । द्वयीम् = द्विविधाम् । उक्तिम् = कथनम् । अफले = पूर्वोक्तान्वयत्वार्थशून्ये । अर्थजाते = स्वाभिधेयसामान्यजातिमात्र इत्यर्थः । वहन् = वर्त्तमानः । असंस्कारहताम् = अव्युत्पत्तिदूषितामिव । करोति = कुरुते ॥ ४८ ॥

वीतौजसः सन्निधिमात्रशेषा भवत्कृतां भूति-मपेक्षमाणाः । समानदुःखा इव नस्त्वदीयाःसरूपतां पार्थ ! गुणा भजन्ते ॥ ४९ ॥

हे पार्थ ! = अर्जुन ! । वीतौजसः = निष्प्रभाः । सन्निधिमात्रशेषाः = सत्तामात्रावशिष्टाः । भवत्कृताम् = भवता करिष्यमाणाम् । भूतिम् = अभ्युदयम् अपेक्षमाणाः = अपेक्षां कुर्वाणाः । त्वदीयाः = तावकीनाः । गुणाः = शौर्याणि । समानदुःखाः = समदुःखभाजइव । नः = अस्माकम् । सरूपताम् = वीतौजस्त्वादि साधर्म्यम् । भजन्ते = सेवन्ते ४९

आक्षिप्यमाणं रिपुभिः प्रमादान्नागैरिवालूनसटंमृगेन्द्रम् । त्वांधूरियं योग्यतयाधिरूढादीप्त्यादिनश्रीरिव तिग्मरश्मिम् ॥ ५० ॥

प्रमादात् = अनवधानतायाः ( प्रज्ञाविहीनत्वात् ) न तु दौर्बल्यादिति भावः । रिपुभिः = शत्रुभिः । आक्षिप्यमाणम् = अधिक्षिप्यमाणम् । अतएव प्रमादात् नागैः = गजैः । आलूनसटम् = आक्षिप्तकेसरम् । मृगेन्द्रम् = सिंहमिव स्थितम् त्वाम् = भवन्तमर्जुनम् । इयम् = एषा । धूः = कार्यभारः । तिग्मरश्मिम् = सूर्यम् । दीप्त्या = प्रकाशेन । दिनश्रीरिव = दिवसशोभेव । योग्यतया = निर्वाहकतया । अधिरूढा = आरूढवती ॥ ५० ॥

करोति योऽशेषजनातिरिक्तां संभावनामर्थवतींक्रियाभिः । संसत्सुजाते पुरुषाधिकारे न पूरणीं समुपैति संख्या ॥ ५१ ॥

यः = पुरुषः। अशेषजनात् = इतरनरात्। अतिरिक्ताम् = अधिकाम्। सम्भावनाम् = योग्यताम्। क्रियाभिः = चरित्रैः। अर्थवतीम् = सफलाम्। करोति = विदधाति। तम् = जनम्। संसत्सु = सभासु। पुरुषाधिकारे = योग्यपुरुषगणनाप्रस्तावे। जातेसति। पूरणीसंख्या = द्वित्वादिगणना। न समुपैति = नहि प्राप्नोति। अद्वितीयो भवतीत्यर्थः॥ ५१॥

प्रियेषु यैः पार्थ ! विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः। तव प्रयातस्य जयाय तेषां क्रियादघानां मघवा विघातम्॥ ५२॥

हे पार्थ ! = भो अर्जुन !। प्रियेषु = अस्मासु विषये। उपपत्तेः = कारणात्। विनैव = ऋतएव। विचिन्त्यमानैः = अकस्मादेवाशङ्क्यमानैः। यैः = अघैः। चेतः = चित्तम्। क्लमम् = खेदम्। एति = प्राप्नोति। जयाय = जेतुम्। प्रयातस्य = प्रगतस्य। तव = भवतःसम्बन्धिनाम्। तेषाम् = अमीषाम्। अघानाम् = व्यसनानाम्। मघवा = इन्द्रः। विघातम् = निवारणम्। क्रियात् = करोतु॥ ५२॥

मागाश्चिरायैकचरः प्रमादं वसन्नसंबाध शिवेऽपि देशे। मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि॥ ५३॥

असम्बाधः = असङ्कटः ( विजन इत्यर्थः ) शिवः = निर्बाधः। अस्मिन्नसंबाध शिवेऽपि देशे। चिराय = चिरम्। एकचरः = एकाकी। वसन् = निवासं कुर्वन्। प्रमादम् = अनवधानताम् ( दौर्बल्यम् ) मागाः = मागमः। मात्सर्यम् = द्वेषः। रागः = स्नेहः। ताभ्याम्। उपहतात्मनाम् =

रागद्वेषदूषितस्वभावानाम्। मानसानि = मनांसि।साधुषु = सज्जनेष्वपि विषये। स्खलन्ति = विकुर्वते हि ॥ ५३ ॥

तदाशु कुर्वन् वचनं महर्षेर्मनोरथान्नः सफलीकुरुष्व। प्रत्यागतं त्वास्मि कृतार्थमेव भुजोपपीडं परिरब्धुकामा ॥ ५४ ॥

तद् = तस्माद्धेतोः। आशु = शीघ्रम्। महर्षेः = व्यासस्य। वचनम् = वाक्यम्। कुर्वन् = विदधन् ( तपस्यन्नित्यर्थः ) नः = अस्माकम्। मनोरथान् = आशाः। सफलीकुरुष्व = अरिनिर्यातनेनास्मान् प्रतिष्ठापयेत्यर्थः। कृतार्थम् = कृतकृत्यम्। प्रत्यागतम् = प्रत्यायातमेव। त्वा = त्वाम्। भुजोपपीडम् = बाहूपपीडम्। परिरब्धुकामास्मि = ग्रहीतुमिच्छामीत्यर्थः ॥ ५४ ॥

उदीरितां तामिति याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम्। आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः ॥ ५५ ॥

सः = असावर्जुनः। इति = इत्थम्। याज्ञसेन्या = द्रौपद्या। उदीरिताम् = उक्ताम्। नवीकृतः = पुनरुद्घाटनेन तथा प्रत्यायितः। अतएव। उद्ग्राहितः = मनासिनिधापितश्च। प्रकारः = परिभवः। यया सा, ताम् = अमुम्। वाचम् = वचनम्। आसाद्य = आकर्ण्येत्यर्थः। उदीचीं काष्ठाम् = उत्तरादिशम्। तिग्मरश्मिरिव = भानुरिव। भृशम् = अत्यर्थम्। दिदीपे = जज्वाल। चुक्रोधेत्यर्थः ॥ ५५ ॥

अथाभिपश्यन्निव विद्विषः पुरः पुरोधसारोपितहेतिसंहतिः। बभार रम्योऽपि वपुः सभीषणं गतः क्रियामन्त्र इवाभिचारिकीम् ॥ ५६ ॥

अथ = अनन्तरम् । विद्विषः = अरीन् । पुरः = अग्रे । अभिपश्यन् = समन्तादालोकमान इवस्थितः । तथा । पुरोधसा = पुरोहितेन । धौम्येनारोपिता = समन्त्रमाहिता । हेतिसंहतिः = आयुधकृपाळो यस्य सतथोक्तः = अर्जुनः । रम्यः = सौम्यः सन्नपि । अभिचारः = परहिंसा । प्रयोजनं यस्याः साभिचारिकी ताम् । क्रियाम् = कार्यम् । गतः = प्राप्तः । मन्त्रइवरम्यः = प्रकृत्यारमणीयः । भीषणम् = भयानकम् । वपुः = शरीरम् । बभार = कृतवानित्यर्थः॥५६॥

अविलङ्घ्य विकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम्। अगतावरिदृष्टिगोचरं शित निस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥

परैः = अरिभिः । अविलङ्घ्यम् = अनतिक्रमणीयम् । विकर्षणं यस्य तत् = अमोघकर्षणमित्यर्थः । प्रथितः = ख्यातः । ज्यारवः = गुणध्वनिः । कर्म = वाणमोक्षणादिकं च यस्य तत् । कार्मुकम् = धनुश्चोद्वहन् । अरीणाम् = शत्रूणाम् । दृष्टिगोचरम् = दृष्टिपथम् । अगतौ=अनुपायौ । आहवेष्वनिवर्त्तित्वादस्येतिभावः । निर्गतास्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशःखङ्गः । तेन शितेन = तीक्ष्णेन युक्त इति । शितनिस्त्रिंश युजौ । महेषुधी = दीर्घ निषङ्गौ ॥ ५७ ॥

यशसेव तिरोदधन् मुहुर्महसागोत्रभिदायुधक्षतीः। कवचं च सरत्नमुद्वहन्ज्वलितज्योतिरिवान्तरंदिवः ॥ ५८ ॥

गोत्रभिदः = इन्द्रस्य । आयुधक्षतीः = वज्रप्रहाररन्ध्राणि । महसा = स्वकान्त्या । यशसेव = मूर्तयाकीर्त्येव । मुहुः = भूयः । तिरोदधन् = आच्छादयन् । सरत्नम् =

रत्नसहितम् । अतएव । ज्वलितज्योतिः = दीप्ततारकम् । दिवोऽन्तरम् = नभोमध्यमिवावस्थितम् । कवचम् = वर्मच । उद्वहन् = उत्थापयन् ॥ ५८ ॥

अलकाधिपभृत्यदर्शितं शिवमुर्वीधरवर्त्म संप्रयान् । हृदयानि समाविवेशस क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ॥

सः = असावर्जुनः । अलकाधिपभृत्येन = यक्षेण । दर्शितम् = प्रकटितम् । अतः । शिवम् = निर्बाधम् । उर्वीधरवर्त्म = हिमवन्मार्गम् प्रति । सम्प्रयान् = प्रगच्छन । क्षणाम् = अल्पकालम् । उद्बाष्पदृशाम् = वियोगदुःखात् साश्रुनेत्राणाम् तपोभृताम् = द्वैतवननिवासिनांतपस्विनाम् । हृदयानि = मनांसि । समाविवेश = खेदयामासेत्यर्थः ॥ ५९ ॥

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुर कुसुम निपातै र्व्योम्नि लक्ष्मी र्वितेने ।
प्रियमिव कथयिष्यन् नालिलिङ्गस्फुरन्ती
भुवमनिभृतवेला वीचिबाहुःपयोधिः॥६०॥

अथ = अनन्तरम् । आशाः = दिशः । दिविभवं दिव्यम् = सुन्दरम् ( दिगादिभ्योयत् ) दुन्दुभिध्वानम् = बृहड्ढक्कारवम् । अनुजगुः = अनुदध्वनुः । व्योम्नि = आकाशे । सुरकुसुमनिपातैः = देवपुष्पवर्षणैः । लक्ष्मीः = श्रीः । वितेने = अतनिष्ट । अनिभृताः = चञ्चलाः = वेलायाम् = समुद्रकूले यावीचयस्ता एवबाहवो भुजायस्य सतथोक्तः । पयोधिः = समुद्रः । स्फुरन्तीम् = उल्लसन्तीम् । हर्षात्स्पन्दमानांच । भुवम् = पृथिवीम् । प्रियम् = इष्टम् । भारावतारणरूपम् । कथयिष्यन्निव = वक्तुमिवेत्यर्थः । आलिलिङ्ग = आलिङ्गितवान् ॥ ६० ॥ मालिनीवृत्तम् ॥

इति तृतीयःसर्गः

## परीक्षोपयोगिप्रश्नाः–१६०६ ई०

### व्याकरणे

१–हरेऽव, गवेन्द्रः, तच्छिवः, भोदेवाः, भगोनमस्ते, मनोरथः एतानिसाधयत।

२–सख्युः, क्रोष्टुः, दधानि, धुक्षु, मघोनः, महान्, अस्याः, एषां सिद्धिः।

३–बभूव, राजतुः, अधिजगे, जुहुधि, गृहाण, एषां सिद्धि-प्रकारः प्रदर्शनीयः।

४–राजयुध्वा, हित्वा, अनश्वः, चित्रगुः, वैयाकरणः, ताव-कीनः, एषां साधुत्वं विग्रहवाक्यानि च ब्रूत।

५–पचन्ति, सर्पिका, सुमुखी एषां सिद्धिं प्रदर्शयत॥

### तर्क संग्रहे–

१–पृथिव्याः किंलक्षणम्, पार्थिव मिन्द्रियंचाकिम्–

२–रसः कतिविधः कुत्रचकीदृशः किञ्चतल्लक्षणम्–

३–स्मृतेर्लक्षणम्, तत्रत्यपदानां कृत्यं चोच्यताम्.

४–असमवायिकारणस्य लक्षणमुदाहरणञ्चोच्यताम्

५–घटरूपस्य साक्षात्कारः केनेन्द्रियेणभवतिकश्चतत्र सन्निकर्षः

६–उपाधेर्लक्षणमुदाहरणञ्चोच्यताम्,

### श्रुतबोधे–

१६, १३, ३८, १८, श्लोकलक्षणम्

### रघुवंशे

| सर्ग | श्लोक संख्या |
|---|---|
| २ | २० |
| ३ | ४३, ६८ |
| ४ | ४३ |
| ५ | १३, ६५ |

रामायणे ४९, ७०, ८८

महाभारते १७, ४०, ९४